॥ श्रीः ॥

श्रीपाञ्चरात्रे भगवच्छास्त्रे

# शेषसंहिता

(सर्वसंहितासारभूता)



श्रीमहीशूरधर्मसंस्थाधिकारिणां

अनुमत्या

श्रीमन्महाराजसंस्कृतमहापाठशालाधिकारिणां

प्रत्यवेक्षणेन

महामहोपाध्यायेन पण्डितरत्नेन धर्माधिकारिणा

**लक्ष्मीपुरं श्रीनिवासाचार्येण**

संशोधिता



मैसूरु

श्रीमद्राजकीयशाखामुद्रालये मुद्रापिता

१९३५

# ಪೀಠಿಕೆ

---

ಆಗಮಗಳ ವಿಷಯದಲ್ಲಿ ಬಹುದೊಡ್ಡದಾದ ಆಗಮವಿಚಾರವೆಂಬ ಗ್ರಂಥವು ಸಂಸ್ಕೃತದಲ್ಲಿ ಸಕಲಕಾಲದೇಶೋಪಯೋಗಕ್ಕಾಗಿ ಬರೆಯಲ್ಪಟ್ಟಿರುತ್ತದೆ. ಅದು ಸಮಯಾಂತರದಲ್ಲಿ ಪ್ರಚುರಪಡಿಸಲ್ಪಡುವುದು. ಪ್ರಕೃತದಲ್ಲಿ ಈ ಶೇಷಸಂಹಿತಾ ವಿಷಯದಲ್ಲಿ ಸಂಕ್ಷೇಪವಾಗಿ ಸಕಲ ಸಾಮಾನ್ಯಜನರ ತಿಳಿವಳಿಕೆಗೋಸ್ಕರ ದೇಶಭಾಷೆಯಲ್ಲಿ ಒಂದು ಉಪೋದ್ಘಾತವು ಬರೆಯಲ್ಪಡುವುದು.

ಈ ಶೇಷಸಂಹಿತೆಯು ಬಹು ಸಂಕ್ಷೇಪವಾಗಿಯೂ ಬಹು ವಿಷಯಗಳಿಂದ ಕೂಡಿರುವುದಾಗಿಯೂ ಈಗಿನ ಕಾಲದಲ್ಲಿರುವ ಸದಾಚಾರಕ್ಕೆ ಮುಖ್ಯವಾದ ಪ್ರಮಾಣ ಗ್ರಂಥವಾಗಿಯೂ ಇರುವುದರಿಂದ ಇದನ್ನು ಮುದ್ರಿಸಬೇಕೆಂದು ಪ್ರಯತ್ನವಾಯಿತು.

ಆಗಮ ಸಂಪ್ರದಾಯವು ಅನಾದಿಕಾಲದಿಂದ ಈ ಭರತಖಂಡದಲ್ಲಿತ್ತೆಂಬುದಕ್ಕೆ ಇದೊಂದು ಮುಖ್ಯ ಕಾರಣವು—ಪರಮವೈದಿಕರಾದ ಆರ್ಯರೆಂಬ ಪ್ರಾಚೀನಮೀಮಾಂಸಕರು ವಿಗ್ರಹಾರಾಧನೆಯನ್ನು ನಿರಾಕರಿಸಿರುತ್ತಾರೆ. ಆದುದರಿಂದ ಆರ್ಯರ ಪ್ರವೇಶಕ್ಕಿಂತಲೂ ಪೂರ್ವದಲ್ಲಿ ಆಗಮ ಸಂಪ್ರದಾಯವಿತ್ತೆಂಬುದು ಸ್ಪಷ್ಟವು.

ಪಾಂಚರಾತ್ರ ಸಂಪ್ರದಾಯವು ಈಗ ಪ್ರಚಾರದಲ್ಲಿರುವ ವೇದಗಳಿಗೆಲ್ಲಾ ಮೂಲವಾದ ರಹಸ್ಯಾಮ್ನಾಯವೆಂಬ ವೇದಮೂಲಕವಾಗಿ ಪ್ರವೃತ್ತವಾಯಿತೆಂದು ಮಹಾಭಾರತಾದೀತಿಹಾಸಗಳಿಂದ ತಿಳಿದುಬರುತ್ತದೆ. ಈ ಆಗಮ ಸಂಪ್ರದಾಯವು 9–10ನೆ ಶತಮಾನಗಳಲ್ಲಿ ಕಾಶ್ಮೀರದೇಶದಲ್ಲಿ ವಿಶೇಷ ಪ್ರಚಾರದಲ್ಲಿತ್ತೆಂದು ಗ್ರಂಥಗಳಿಂದ ವಿಶದವಾಗುತ್ತದೆ.

ಮತ್ತು ಆಗಮಗಳಲ್ಲಿ ಆಪಾತವಾಗಿ ಈ ಅಭಿಪ್ರಾಯ ತೋರಿಬರುತ್ತದೆ:—ಶ್ರುತಿಸ್ಮೃತಿ ಸಮ್ಮತವಾದ ವರ್ಣಾಶ್ರಮವ್ಯವಸ್ಥೆಯು ಭಗವದ್ಭಕ್ತಿಯೆಂಬ ಪ್ರಧಾನ ಗುಣದಿಂದ ನಿರಾಕರಿಸಲ್ಪಟ್ಟಿರುವುದೆಂದು.

ಈ ಅಭಿಪ್ರಾಯವು ಈ ಆಗಮದಲ್ಲಿ ಸ್ಪಷ್ಟವಾಗಿ ನಿರಾಕರಿಸಲ್ಪಟ್ಟಿರುವುದು. ಈ ಅಂಶವನ್ನು ಶ್ರೀ ವೇದಾನ್ತಾಚಾರ್ಯರೇ ಮೊದಲಾದ ಪೂರ್ವಾಚಾರ್ಯರು ರಹಸ್ಯತ್ರಯಸಾರಗ್ರಂಥದ ಪ್ರಭಾವ ವ್ಯವಸ್ಥಾಧಿಕಾರದಲ್ಲಿ ಈ ಆಗಮದ ವಚನಗಳನ್ನುದಹರಿಸಿ ನಿರೂಪಿಸಿರುವರು.

ಈಗ ಭಾಗವತ ಸಂಪ್ರದಾಯದಲ್ಲಿ ಬಳಕೆಯಲ್ಲಿರುವ ಅನೇಕ ಮನ್ತ್ರಗಳು, ಧ್ಯಾನಶ್ಲೋಕಗಳು, ಪೂಜಾವಿಧಾನವು, ಪ್ರತಿಷ್ಠಾವಿಧಾನವು ಮೊದಲಾದ ಬಹು ಅಂಶಗಳು ಈ ಸಂಹಿತೆಯಲ್ಲಿರುವುವು.

ಇದರಲ್ಲಿ ಪಾಂಚರಾತ್ರಾಗಮಸಾರವಾದ ಸಕಲ ಫಲ ಸಾಧನವಾದ ಪ್ರಪತ್ತಿ ಸ್ವರೂಪವನ್ನು ನಿರೂಪಿಸಿರುತ್ತದೆ. ರಹಸ್ಯತ್ರಯಕ್ಕೆ ಇದೇ ಮೂಲವಾಗಿರಬಹುದು. ಇಂತಹ ಅತಿ ಸಂಕ್ಷಿಪ್ತವಾಗಿ ಸಮಗ್ರವಾಗಿ ಶುದ್ಧವಾಗಿ ಬಹು ವಿಷಯ ಪರಿಪೂರ್ಣವಾದ ಗ್ರಂಥವಾವುದೂ ಇಲ್ಲವೆಂದು ಇದನ್ನು ಪ್ರಚಾರ ಪಡಿಸಲಾಯಿತು. ಇದರಲ್ಲಿರುವ ಪ್ರತಿ ವಿಷಯವೂ ಈಗ ಎಲ್ಲರಿಗೂ ಬೇಕಾಗಿರುತ್ತದೆ.

ಮ್ಲೇಚ್ಛಚಂಡಾಲಾದಿಗಳಿಗೂ ಅಷ್ಟಾಕ್ಷರ ಮಂತ್ರಾಧಿಕಾರವನ್ನು ಈ ಸಂಹಿತೆಯು ಹೇಳುತ್ತದೆ (10 ಪು). ಮುಖ್ಯವಾಗಿ ಆಗಮ ಸಂಪ್ರದಾಯವು ಸಕಲ ಪ್ರಾಣಿಗಳ ಸಮುದ್ಧಾರಣಾರ್ಥವೆಂಬುದು ಸ್ಪಷ್ಟವು. ಆಗಮಗಳಲ್ಲಿ ಪರಸ್ಪರ ವಿರೋಧವೂ ಖಣ್ಡನೆಯೂ ತೋರಿದರೂ ಸರ್ವಾಗಮಪ್ರಾಮಾಣ್ಯವಾದಿಗಳಾದ ಪ್ರಾಮಾಣಿಕರಾದ ಜಯನ್ತ ಭಟ್ಟಾಚಾರ್ಯರೇ ಮೊದಲಾದವರ ಗ್ರಂಥಗಳ ಪರಿಶೀಲನೆಯಿಂದ ಸಮರಸವಾಗುವುದು.

ಈ ಗ್ರಂಥವು ಬ್ರಹ್ಮನಿಗೆ ನಾರಾಯಣನಿಂದ ಉಪದಿಷ್ಟವಾಯಿತು, ಅದೇ ಪ್ರಕಾರದಿಂದ ಶೇಷನೆಂಬ ಸಂಕರ್ಷಣನು ಅನಂತನು ನಾರದನಿಗೆ ಉಪದೇಶಮಾಡಿದನು. ಆದುದರಿಂದ ನಾರದ ಶೇಷಸಂವಾದರೂಪವಾಗಿಯೂ ಚತುರ್ಮುಖ ಸಂಬೋಧನ ರೂಪವಾಗಿಯೂ ಶೇಷಸಂಹಿತಾ ಪ್ರಸಿದ್ಧಿಯೂ ಇರುತ್ತದೆ. ಇದಕ್ಕೆ ಶೇಷಸಂಹಿತೆಯಂತೆ ಅನಂತಸಂಹಿತೆಯೆಂದೂ ನಾಮವಿರಬೇಕು. ಅಷ್ಟೋತ್ತರ ಸಂಹಿತಾ ಪರಿಗಣನೆಯಲ್ಲಿ ಅನಂತಸಂಹಿತಾ ನಾಮವಿರುತ್ತದೆ. ಶೇಷಸಂಹಿತಾನಾಮವಿಲ್ಲದಿದ್ದರೂ ಬಾಧಕವಿಲ್ಲ. ಸಕಲ ಸಂಹಿತೆಗಳ ಪರಿಶಿಷ್ಟಾಂಶವನ್ನು ಇದು ಹೇಳುತ್ತಿದೆಯಾದುದರಿಂದ ಶೇಷಸಂಹಿತೆಯೆಂದು ಹೆಸರು ಎಂದು ಕೆಲವರು ಹೇಳಬಹುದು.

ಈ ಸಂಹಿತೆಯನ್ನು ಮುದ್ರಣಮಾಡುವುದಕ್ಕೆ ಅನುಜ್ಞೆಯನ್ನಿತ್ತ ಮುಜರಾಯಿ ಇಲಾಖಾಧಿಕಾರಿಗಳ ವಿಷಯದಲ್ಲೂ ಇದರ ಮೇಲ್ವಿಚಾರಣೆಯನ್ನು ತೆಗೆದುಕೊಂಡ ಸಂಸ್ಕೃತ ಪಾಠಶಾಲಾಧಿಕಾರಿಗಳ ವಿಷಯದಲ್ಲೂ ಮುದ್ರಣಕ್ಕೆ ವಿಶೇಷ ಸಹಾಯಮಾಡಿದ ಸಂಸ್ಕೃತ ಪಾಠಶಾಲಾಗಮ ಪ್ರಧಾನ ಪಂಡಿತರ ವಿಷಯದಲ್ಲೂ ಬಹುಕೃತಜ್ಞತಾಸ್ಮರಣವಿರುತ್ತದೆ.

ಇದನ್ನು ಶೋಧಿಸುವುದಕ್ಕೆ ಶ್ರೀ ಪರಕಾಲ ಸ್ವಾಮಿ ಸನ್ನಿಧಿಯ ಗ್ರಂಥಾಕ್ಷರದ ಶುದ್ಧಪ್ರತಿಯೊಂದೂ, ಶ್ರೀ ಮೇಲ್ಕೋಟೆ ಯತಿರಾಜ ಸ್ವಾಮಿಗಳ ಸನ್ನಿಧಿಯ ಗ್ರಂಥಾಕ್ಷರದ ಶುದ್ಧವಾದ ಎರಡು ಪ್ರತಿಗಳೂ ಅನುಗ್ರಹಿಸಲ್ಪಟ್ಟವು. ಆದುದರಿಂದ ಆ ಸನ್ನಿಧಿಗಳಿಗೆ ಅನಂತ ಧನ್ಯವಾದಗಳು ಸಮರ್ಪಿಸಲ್ಪಡುತ್ತವೆ. ವಿಸ್ತರವು ಮುಂದಿರುತ್ತದೆ. ಇಂತು,

ಸಜ್ಜನ ವಿಧೇಯಃ,

ಲಕ್ಷ್ಮೀಪುರಂ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯಃ.

# विषयसूची

॥ श्रीः ॥

# भगवच्छास्त्रे श्रीपाञ्चरात्रे

## शेषसंहिता

### अवतरणम्

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥

नारदः—

देव शेष महादेव श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्यागमविधिं सर्वं नित्यनैमित्तिकात्मकम् ॥
मन्त्रध्यानादिभेदं च संस्कारक्रमलक्षणम् ।
मोक्षोपायकरं सौम्यं देवतानिर्णयं परम् ॥

शेषः—

अथ वक्ष्यामि सर्वज्ञ शृणु नारायणेरितम् ।
तत्सर्वं वदतस्सम्यक् श्रुत्यागमविधानतः ॥
पञ्चमो वेद इत्युक्तः पञ्चरात्रं तु नारद ।
तन्मार्गेणैव सर्वं स्यात् लभेन्मोक्षं हितं हरिम् ॥
श्रुतिमन्त्रैस्सदा कुर्यात् हरिपूजां द्विजोत्तमः ।
पञ्चरात्रोक्तमार्गेण वेदमन्त्रैस्ससात्त्विकैः ॥

पञ्चकालविधानेन विष्णुमर्चयन्तीह ये ।
धर्मकामादिकं प्राप्य ते यान्ति परमं पदम् ॥
प्रपन्नानां मुमुक्षूणां परमैकान्तिनां सदा ।
अष्टाङ्गयोगयुक्तानां वेदमार्गरतात्मनाम् ॥
धर्मसंस्थापकानां स्यात्पञ्चरात्रं चतुर्मुख ।
तस्मात्सर्वप्रयत्नेन पञ्चरात्रेण पूजयेत् ॥

### विषयतुक्रमः

तत्सर्वं तु चतुष्षष्ट्या ह्यध्यायानां वदाम्यहम् ।
अकारादिक्षकारान्तं देवताः प्रथमे तथा ॥
द्वितीये च तृतीये च मातृकाक्षरवर्णनम् ।
नारसिंहजयन्ती तु चतुर्थे तु महामते ॥
बाणे मत्स्यजयन्ती च षष्ठे कूर्मजयन्तिका ।
वाराहं सप्तमे तद्वत् वामनं त्वष्टमे तथा ॥
श्रीरामं नवमे प्रोक्तं श्रीकृष्णं दशमे तथा ।
एकादशे पुनस्तद्वत् द्विजस्यैकादशीविधिः ॥
द्वादशे सात्त्विकाचारः स्त्रीशूद्राणां त्रयोदशे ।
चतुर्दशे तथा वक्ष्ये पौरश्चरणलक्षणम् ॥
पौरश्चरणकाचारं वक्ष्ये पञ्चदशे तथा ।
षोडशे पौरुषं सूक्तं श्रीसूक्तमथ कथ्यते ॥
अष्टादशे तु भूसूक्तं यन्त्रतन्त्रादिसंयुतम् ।
एकोनविंशात्त्रिंशान्तं बीजमन्त्रमथोच्यते ॥
एकत्रिंशे महाशान्तिः द्वात्रिंशे पञ्चगव्यकम् ।
व्याधिशान्तिस्त्रयस्त्रिंशे चतुस्त्रिंशे प्रयोगकम् ॥

पञ्चत्रिंशे तु गायत्री षट्त्रिंशे तु तदङ्गकम् ।
सप्तत्रिंशे तदङ्गं तु गायत्रीयन्त्रसंयुतम् ॥
अष्टात्रिंशे तु वाराहं यन्त्रतन्त्रादिसंयुतम् ।
ततःपरं तदङ्गं स्यात् चत्वारिंशे तदङ्गकम् ॥
एकचत्वारिंशके तु हयग्रीवं सयन्त्रकम् ।
ध्यानमण्डलभेदश्च ततश्चाध्याययोर्द्वयोः ॥
चतुश्चत्वारिंशके च नारासिंहं सयन्त्रकम् ।
पञ्चचत्वारिंशके तु तदङ्गं तु तदङ्गकम् ॥
षट्चत्वारिंशके चैव वक्ष्ये सम्यग्यथातथम् ।
सप्तचत्वारिंशके च सुदर्शनमनुस्तथा ॥
अष्टचत्वारिंशके च तदङ्गं च तदङ्गकम् ।
तथैवैकोनपञ्चाशे यन्त्रतन्त्रादिसंयुतम् ॥
पञ्चाशे गारुडं चैव वक्ष्ये सम्यग्यथातथम् ।
तथा तदेकपञ्चाशे तदङ्गं तु तदङ्गकम् ॥
द्विपञ्चाशे तथा सम्यक् यन्त्रतन्त्रादिसंयुतम् ।
श्रीरामं तु त्रिपञ्चाशे ध्यानन्यासादिपूर्वकम् ॥
चतुःपञ्चाशके तद्वत् तदङ्गं तु तदङ्गकम् ।
तद्वत्तु पञ्चपञ्चाशे यन्त्रतन्त्रादिकं शुभम् ॥
तत् षट्पञ्चाशके कार्ष्णं मान्मथं सर्वसाधकम् ।
तथैव सप्तपञ्चाशे तदङ्गं तु तदङ्गकम् ॥
अष्टपञ्चाशके तद्वत् यन्त्रतन्त्रादिसंयुतम् ।
तद्वदेकोनषष्ट्यां तु मूलमन्त्रं यथातथम् ॥

षष्ट्यां तदङ्गकं वक्ष्याम्येकषष्ट्यां तदङ्गकम् ।
द्विषष्ट्यां मन्त्ररत्नं तु त्रिषष्ट्यां तु तदङ्गकम् ॥
चतुष्षष्ट्यां तदङ्गं स्यात् मोक्षधर्मार्थसिद्धये ।
इत्येवं क्रमयोगेन ज्ञात्वा मन्त्रं जपेद्बुधः ॥

अक्षरदेवता

अकारस्त्वेकदैवत्यः आकारस्तु द्विदैवतः ।
उकारस्त्वेकदैवत्यः ऊकारस्तु द्विदैवतः ॥
ऋकारस्त्वेकदैवत्यः ॠकारस्तु द्विदैवतः ।
ऌकारस्त्वेकदैवत्यः ॡकारस्तु द्विदैवतः ॥
एकारस्त्वेकदैवत्यः ऐकारस्तु द्विदैवतः ।
ओकारस्तु द्विदैवत्यः औकारस्तु त्रिदैवतः ॥
अङ्कारस्तु द्विदैवत्यः अःकारस्त्वेकदैवतः ।
ककारादिळकारान्तं द्विदैवत्यं तथाऽब्जज ॥
चातुर्दैवत्यमित्युक्तं क्षकारं स्याद्यथाविधि ।
ज्ञात्त्वैवं तु जपेद्विप्रः मनून् सम्याग्विचक्षणः ॥
इदं रहस्यं परमं सर्वसिद्धिकरं परम् ।
अनेनैव भवेत्सर्वं चतुर्वर्गफलप्रदम् ॥
पाषण्डानां नास्तिकानां कृतघ्नानां च नारद ।
नित्यकर्मविहीनानां न वदेत्सर्वदा इदम् ॥
मद्वंशजानां साधूनां पञ्चकालरतात्मनाम् ।
पञ्चसंस्कारयुक्तानामिदं सर्वं वदेत्सदा ॥

इति श्रीपञ्चरात्रे शेषसंहितायां प्रथमोध्यायः

## मन्त्राणां विशेषाः

नारदः—

प्रणवाद्यादिमन्त्रांश्च वद मे सर्वमुत्तमम् ।
सात्त्विकाद्यादिभेदांश्च देवताऋषिनिर्णयम् ॥

शेषः—

पुरा भगवता प्रोक्तं सृष्टिस्थित्यन्तहेतवे ।
चतुर्मुखाय मम च प्रणवाद्यं सुदर्शनम् ॥
ओमिति ब्रह्मरूपं स्यात् पवित्रं तदुदाहृतम् ॥

नारदः—

भगवन् कथितं सर्वं स्वरूपं च गुणास्तथा ।
परिवारैस्तथा मन्त्रैः शस्त्रैरस्त्रैश्च दैवतैः ॥
शक्तिभिर्मण्डलैश्चित्रैः पापैः [कैः] बहुविधैरपि ।
एतैर्विशिष्टमाख्यातं मन्त्ररूपमनुत्तमम् ॥
सर्वेषामेव जन्तूनामज्ञानां परमेश्वर ।
क्षत्रियस्य विशेषेण रक्षार्थं मन्त्र ईरितः ॥
एतस्य मन्त्रराजस्य माहात्म्यं कथितं परम् ।
प्रभावश्च त्रिरूपस्य देवस्य किमयं स्मृतः ॥
सुदर्शननृसिंहस्य किमु किंपरिवारता ।
तमिमं संशयं छिन्धि सर्वज्ञोऽसि यतः प्रभो ॥

शेषः—

पुराभगवता प्रोक्तं सृष्टिस्थित्यन्तहेतवे ।
चतुर्मुखाय मम च प्रणवाद्यं सुदर्शनम् ॥
ओमिति ब्रह्मरूपं स्यात् पवित्रं तदुदाहृतम् ।
तदा मन्त्रमयं सर्वं नारायणसुदर्शनम् ॥

परमं स्वस्वरूपं च वासुदेवेन तन्मम ।
प्रणवस्य प्रभावश्च संक्षेपेण तत्रोच्यते ॥
मन्त्रोत्पत्त्यादिमन्त्राणि शृणु विष्णोश्च नारद ।
अकारस्तत्स्वयं विष्णुः मकारो जीव उच्यते ॥
उकारः श्रीमहालक्ष्मीः नादस्संहार उच्यते ।
विभुरेव स्थितिस्सृष्टिः ओंब्रह्मा सर्वमब्जज ॥
सवर्णान्येकपञ्चाशत् विलिखेद्देशभाषया ।
चक्रवत् बिन्दुरेव स्यात् गदावन्नाद उच्यते ॥
ओंतद्ब्रह्मेत्युपासीत सृष्टिस्थित्यन्तहेतवे ।
ज्ञानभक्त्योः क्रमेणैव मोक्षार्थे तन्नमोन्तकम् ॥
स्थित्यै चक्रं सरसिजं दधानं सृष्टये पुनः ।
मुक्तये पाञ्चजन्यं च गदां संहृतये तथा ॥
ओमिति ब्रह्म । आनन्दमयो ब्रह्म ।
सर्वं खल्विदं ब्रह्म ओमिदं सर्वम् ॥
नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।
नारायणपरो ज्योतिरात्मा नारायणः परः ॥
नारायणपरो ध्याता ध्यानं नारायणः परः ।
स ब्रह्मेति । तद्ब्रह्मेत्युपासीत । तन्नम इत्युपासीत ॥
ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ।
विष्णोस्तु वासुदेवस्य नमो नारायणस्य च ॥
प्रणवादि ततो ब्रह्ममन्त्राणां गरुडस्यच ।
रुद्रादिसर्वमन्त्राणां प्रसत्याद्यादिनां सदा ॥

आदौ वा संपुटं कृत्वा जपेद्ब्रह्मविदब्जज ।
नमः शिवाय मन्त्रः स्यात् पञ्चाक्षरमिदं शृणु ॥
नमश्शिवतराय च नमस्ते रुद्र मन्यवे ।
पञ्चाक्षरादिमन्त्राणां शैवानां कमलासन ॥
षडक्षराणि शैवस्य वेदादौ विधिरों न च ।
शैवपञ्चाक्षराद्याश्च तद्बीजानां कदाचन ॥
अनुलोमजनानां च तान्त्रिकोक्तो विधिर्भवेत् ।
हे ब्रह्मन् शैवमन्त्राणां प्रोक्तं तामसतान्त्रिकम् ॥
स्मृत्यागमपुराणेषु यमाय ऋषिभिश्च तत् ।
मदाज्ञयाऽथरुद्रेण गौतमाद्यैश्च तामसैः ॥
स्मृत्यागमपुराणानि निर्मितानि च कोटिशः ।
शाक्ताश्च तद्वत्कापालाः गाणापत्याः पृथक्पृथक् ॥
बिम्बमन्त्रादितन्त्राश्च मोहकाः कमलासन ।
जातवेदसादिशाक्तानां मन्त्राणां प्रणवो नच ॥
इकार एव मन्त्रादिः शृणुष्व कमलासन ।
क्षुद्रसिद्धेः मद्यमांसपूजनाद्यन्यथा भवेत् ॥
जातिभिश्छादिनां ब्रह्मन् संकराणां च तद्विधिः ।
क्षेत्रस्यपतेतितथा कापालानां च शाक्तवत् ॥
गणानांचेति मन्त्राणां शाक्तवत्प्रणवो नच ।
गांणांपत्यादिनां सम्यग्विधिश्च कमलासन ॥
चार्वाकमन्त्रतन्त्राद्याः शाक्तवन्मोहकारकाः ।
चण्डालाद्यादिहीनानां विधिरन्यस्तथाब्जज ॥

मन्त्रयन्त्रादितन्त्राद्याः तामसाश्चैव देवताः ।
शाक्ताश्च तद्वत्कापालाः गाणापत्याश्च मोहकाः ॥
चार्वाकाद्यादिमन्त्राश्च पूजाद्यास्सत्त्ववर्जिताः ।
प्रणवब्रह्मरहिताः कामका विधिगर्हिताः ॥
स्वर्गभोगप्रदास्तद्वन्नरकप्राप्तिकारकाः ।
वेदोक्तान् तामसान् तद्वत्त्यजेच्च कमलासन ॥
शैवादिपञ्चमन्त्राश्च न द्विजानां कदाचन ।
शास्त्रमोहात्तथा कामात् शैवाद्यान्योऽभ्यसेद्द्विजः ॥
स्त्रियश्शूद्रास्तथा ब्रह्मन् तत्संबन्धान् परित्यजेत् ।
मन्मन्त्रान् विष्णुमन्त्रांश्च वासुदेवं च गारुडम् ॥
सुदर्शनं नारसिंहं रामं कृष्णं वराहकम् ।
प्रणवादि जपेद्भक्त्या प्रपन्नस्सततं द्विजः ॥
मोक्षार्थं विधिवद्ब्रह्मन् सर्वबन्धविमुक्तये ।
मन्मन्त्रस्तोत्रपाठादीन् पद्याद्यांश्च चतुर्मुख ॥
जिज्ञासुर्लेखकश्च स्यात् अर्थार्थी पाठकस्तथा ।
तद्भक्त्या सततं चोक्तज्ञानी चाचार्यवान्भवेत् ॥
आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः ।
नित्यनैमित्तिकपरः सदा मन्त्राश्रयश्शुचिः ॥
सर्वधर्मान्परित्यज्य सर्वकर्मफलानि च ।
शरणं मां प्रपद्यस्व सर्वबन्धविमुक्तये ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥

मन्मन्त्रानभ्यसेत्सम्यक् मदर्थे च प्रयोजयेत् ।
मन्निमित्तकृतं पापमपि धर्माय कल्पते ॥
देवतार्थे गवार्थे च ब्राह्मणार्थे विशेषतः ।
मन्मन्त्रानभ्यसेत्सम्यक् मदर्थे विनियोजयेत् ॥
स एव मत्पिता माता स एव जगतां पिता ।
स एव ब्रह्मवेत्ता च प्रपन्नस्स गुरुश्शुचिः ॥
स एव लोकान् जयति स याति परमं पदम् ।
क्रमेणाष्टोत्तरशतं तस्य वंशे चतुर्मुख ॥
धर्मसंस्थापनार्थाय संभवामि द्विजोत्तम ।
धर्मसंस्थापनार्थे च यस्तु प्राणान्परित्यजेत् ॥
शूद्रादीनां तथा ब्रह्मन् पुनर्जन्म न विद्यते ।

## मन्त्रनियमः

संपिण्डाक्षरमन्त्राणां श्रीरामप्रणवस्य च ॥
नृसिंहार्कवराहाणां मित्रादीन्नैव शोधयेत् ।
तद्वद्धनुमन्मन्त्राणां मित्रादीन्नैव शोधयेत् ॥
वेदान्तार्थस्य मन्त्रस्य सर्वोपनिषदां तथा ।
तथैव विष्णुमन्त्राणां मित्रादीन्नैव शोधयेत् ॥
तथैव कूर्मचक्रादीन् तिथिवारांस्तथाऽब्जज ।
देशकालादिनक्षत्रान् मन्मन्त्राणां न शोधयेत् ॥
मन्मन्त्राणां च विधिना जपध्यानादिपूजनम् ।
होमावरणदिग्बन्धान् तर्पणादीन् सुशोधयेत् ॥
मन्त्रे तीर्थे द्विजे दैवे दैवज्ञे भेषजे गुरौ ।

## मन्त्राधिकारः

याद्दशी भावना यत्र सिद्धिर्भवति ताद्दशी ॥
नमो नारायणायेति नित्यमोंकारपूर्वकम् ।
भवेदष्टाक्षरं मन्त्रं विप्राणां मुक्तिदायकम् ॥
अकारं बिन्दुसंयुक्तं नमो नारायणाय च ।
लक्ष्मीनारायणं मन्त्रं भवेदष्टाक्षरं शुभम् ॥
अध्याप्यं विधिवच्छूद्रान् संकरेष्वनुलोमजान् ।
चण्डालेषु तुरुष्केषु मनुरिष्टार्थदायकः ॥
सर्वसिद्धिकरं शीघ्रं सद्यो मोक्षप्रदायकम् ।
अष्टाक्षरं तु त्रिविधं तथा मत्प्राप्तयेऽब्जज ॥
मन्त्रं दद्यादृषिं च्छन्दो दैवतं योगमेव च ।
द्वादशाक्षरमादौ तु पश्चादष्टाक्षरात्मकम् ॥
मूर्तिमन्त्रांश्च तदनु तदध्याप्यं यथाविधि ।
केवलं वैष्णवं नाम नमःप्रणववर्जितम् ॥
हुंफडादिवषट्स्वाहावर्जितं केशवादिकम् ।
अध्याप्यं स्त्रीषु शूद्रेषु तद्वदेवानुलोमजे ॥
विप्राणां वैदिकं प्रोक्तं क्षत्रियाणां यथाविधि ।
वैश्यानामुत्तमानां च तथावैदिकतान्त्रिकम् ॥
शूद्राणां तान्त्रिकं तद्वत् क्रमेण कमलासन ।
इतरेषां संकराणां तथा तान्त्रिकतान्त्रिकम् ॥
वैदिकं बीजमन्त्रं स्याद्विप्राणां मुक्तिदायकम् ।

## मन्त्रभेदः

खण्डमन्त्रस्तथा ब्रह्मन् तच्च वैदिकतान्त्रिकम् ॥

संज्ञामन्त्रस्तान्त्रिकस्स्यात् प्रणवं बीजमुच्यते ।
पदमन्त्रस्ततो ब्रह्मन् तच्च तान्त्रिकतान्त्रिकम् ॥
वैदिको वेदमन्त्रश्च बीजान्यष्ट तथैव च ।
तद्वद्दैविकमन्त्रश्च सर्वं वैदिकतान्त्रिकम् ॥
आर्षं च तान्त्रिकं तच्च देवसंज्ञाऽत्र कारकम् ।
मानुषं भाषया युक्तं तद्वत्तान्त्रिकतान्त्रिकम् ॥
प्रणवं तच्छ्रिया युक्तं प्रतिपच्च चतुर्विधा ।
तान्त्रिकस्त्वेक एव स्यात् जिज्ञासुस्तत्र तान्त्रिकः ।
अर्थार्थी सततं ब्रह्मन् सदा वैदिकतान्त्रिकः ॥
ब्रह्मात्मकं श्रिया युक्तं ज्ञानं वैदिकमब्जज ।

मन्त्रोत्पत्तिः

नारायणात्प्रणवो जायते प्रणवात् श्रीं ह्रीं क्लीं रां क्षां क्षौं ओमित्यष्टबीजानि जायन्ते ॥

अष्टबीजाच्चतुःपञ्चाशन्मन्त्रा जायन्ते ।

चतुःपञ्चाशन्मन्त्रात् सप्तकोटिमहामन्त्राः त्रय स्त्रिंशत्कोटिमहामन्त्रा जायन्ते ॥

त्रयस्त्रिंशत्कोटिमहामन्त्रात् षट्कर्म जायते ॥

षट्कर्मणः सृष्टिस्थितिसंहारा भवन्ति ॥

षट्कर्मणः वैदिकाः तान्त्रिका भवन्ति ॥

यमनियमप्राणायामप्रत्याहारध्यानधारणमानसमाख्या वैदिका भवन्ति ॥

सर्वान् लोकान् जयति ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ब्रह्मवान् भवति ब्रह्मोपनिषदः ओमिति ब्रह्म ॥

नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।
नारायण परं ब्रह्म ओमित्येकाक्षरं परम् ॥
ओमित्यक्षरवत् श्रीश्च अविभक्ता ममाब्जज ।
देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ॥
स्त्रीनाम्नी लक्ष्मीः हे ब्रह्मन् नानयोर्विद्यते परम् ॥
श्रीबीजात् प्रणवाच्चैव महामाया च वाग्भवम् ।
भूबीजं च महामाया नीलाबीजं च वाग्भवम् ॥
मन्मायामग्निबीजं च कृष्णरामौ ममाब्जज ।
चिन्तामणिं तद्धवलं नृसिंहं चोग्रसौम्यकम् ॥
तारं तारं च ओमिति व्यूहाख्यं वासुदेवकम् ।
एतेषां सप्तबीजानां ताभ्यां ब्रह्मन् समुद्भवः ।
सप्तबीजेषु चोद्भूताः मन्त्रास्सप्त च कोटयः ॥
मन्त्रेषु सप्तकोटीषु मन्त्रास्तद्वत्समुद्भवाः ।
कोटयश्च त्रयस्त्रिंशत् क्रमेण कमलासन ।
मन्त्रास्तद्वन्मनुष्याश्च मदंशा जायते बहु ।
रुद्रादीनां स्वल्पफलं फलन्ति कमलासन ।
त्रयस्त्रिंशद्दैवता देवता एवावरुन्धे ॥

प्रणवऋष्यादिः

प्रणवस्य ऋषिः ब्रह्मा देवी गायुत्र्यथोच्यते ।
छन्दो विष्णुर्देवता च अं बीजं शक्तिरुं तथा ॥
मं कीलकं ह्रींकवचं रक्तवर्णं तथाब्जज ।
षडङ्गं षड्स्वरैर्न्यस्यमनन्तं विश्वतोमुखम् ॥

सृष्टिस्थित्यन्तमोक्षार्थं प्रणवं तज्जपेत्सदा ।
सर्वकामप्रसिद्ध्यर्थं भुक्तिमुक्तिप्रदायकम् ।
ओमिति ब्रह्म नारायण परं ब्रह्म तद्ब्रह्मेत्युपासीत ॥

ध्यानम्—

शङ्खचक्रगदापद्मधरं नीलोत्पलप्रभम् ।
पुण्डरीकाक्षममलं किरीटादिविभूषितम् ।
श्रीभूमिसहितं देवं पङ्कजासनसंस्थितम् ॥
ज्ञानानन्दमयं देवं नारायणमुपास्महे ।

**स्वरमन्त्रऋष्यादिः**

अकारस्य ऋषिर्ब्रह्मा छन्दो गायत्रमुच्यते ।
नारायणो देवता च ओं बीजं शक्तिः श्रीं तथा ।
ह्रीं कीलकं ऐं कवचं शुक्लवर्णोथ षट्स्वरैः ।
न्यासं कुर्यात् षडङ्गं तु संस्मरेत्सर्वतोमुखम् ।
सृष्टिस्थित्यन्तमोक्षार्थं प्रणवान्तं जपेत्सदा ।
काम्यार्थी च जपेद्भक्त्या मोक्षार्थी सततं जपेत् ॥
सृष्टिस्थित्यन्तमोक्षार्थं जपेत्तच्च नमोन्तकम् ॥

ध्यानम्—

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः ॥

आकारस्य ऋषिर्धाता बृहती छन्द उच्यते ।
देवता श्रीर्महालक्ष्मीः श्रीं बीजं शक्तिः ह्रीं ततः ॥

ई कीलकं ऊं कवचं रक्तवर्णोथ षट्स्वरैः ॥
न्यासं कुर्यात्तदङ्गं तु सर्वाकारं स्मरेद्विभुम् ।
भुक्तिमुक्तिप्रदं शान्तं सृष्टिस्थित्यन्तकारणम् ॥
सर्वैश्वर्यकरं श्रेयः सर्वोपद्रवनाशनम् ॥

ध्यानम्—

सर्वाभरणभूषाङ्गीं वरदाभयधारिणीम् ।
विष्णुप्राणां पद्महस्तां विष्णुपत्नीं भजेद्विभुम् ॥
इकारस्य ऋषिर्व्यासः छन्दस्त्रिष्टुप् तथाब्जज ।
देवता हरिरित्युक्तः ह्रीं बीजं शक्तिः ह्रीं तथा ॥
ह्रीं कलिकं मं कवचं श्यामो वर्ण उदाहृतः ।
विभुं संपत्प्रदं ध्यायेत् षडङ्गं षट्स्वरैः न्यसेत् ॥

ध्यानम्—

शङ्खचक्रगदापद्मधरं तं श्यामवाससम् ।
भजेत्समस्तदुःखानां प्रसन्नवदनं हरिम् ॥
ईकारस्य ऋषिर्ब्रह्मा छन्दो गायत्रमुच्यते ।
नीला च देवतेत्युक्ता हं बीजं शक्तिमं तथा ॥
लं कीलकं उं कवचं नीलनीरनिधिप्रभाम् ।
षडङ्गं षट्स्वरैर्न्यस्य विभ्वीं संपत्प्रदां स्मरेत् ॥

ध्यानम्——

कृष्णमालाम्बरधरां सर्वव्यापिहरिप्रियाम् ।
चतुर्भुजां भजेन्नीलां सर्वमङ्गलदायिनीम् ॥
उकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवता श्रीमहालक्ष्मीः श्रीं बीजं शक्तिरुं ततः ॥

ओं कीलकं मं कवचं रक्तवर्णां इमां स्मरेत् ।
षडङ्गं षट्स्वरैः कृत्वा सर्वसिद्धिप्रदायकम् ॥

ध्यानम्—

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥
ऊकारस्य ततो ब्रह्मन् वसिष्ठऋषिरुच्यते ।
छन्द आनुष्टुभं प्रोक्तं शक्तिर्भूमिरुदाहृता ॥
ह्रीं बीजं च श्रीं च शक्तिः कीलकं च विभुर्मही ।
कवचं रक्तवर्णं च षडङ्गं षट्स्वरैर्न्यसेत् ॥
सर्वैश्वर्यप्रदं नृणां सृष्टिस्थित्यन्तकारणम् ।
सर्वशत्रुविनाशार्थं स्मरेदैश्वर्यदायकम् ॥

ध्यानम्—

विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम् ।
लक्ष्मीप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥
पिनाकी च ऋकारस्य ऋषिरित्युच्यते तथा ।
त्रिष्टुप्छन्दो देवता च विष्वक्सेनः प्रजापते ॥
ओं बीजं मिथुनं शक्तिः कीलकं यं विभुं प्रभुम् ।
यं कवचं श्वेतवर्णं स्मरेद्राज्यप्रदायकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदैश्वर्यदायकम् ।

ध्यानम्—

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

ऋृकारस्याप्यगस्त्यश्च पाङ्क्तिश्च श्छन्द एव च ।
देवतात्वनिरुद्धश्च अं बीजं डं च शक्ति च ॥
नं कीलकं रिं कवचं रक्तवर्णं स्मरेत्सदा ।
षडङ्गं षट्स्वरैर्न्यस्य कालानलसमप्रभम् ॥

ध्यानम्—

कालानलसमप्रख्यं त्रिनेत्रं चोग्रविग्रहम् ।
चतुर्भुजधरं देवमनिरुद्धं हरिं भजे ॥
अगस्त्यश्च ऌकारस्य ऋषिरित्युच्यते विभुः ।
छन्दश्च जगती चैव गोपालो देवताऽब्जज ॥
लं बीजं च च ऊं शक्तिः कीलकं क्लीं च मोहनम् ।
ओं कवचं श्यामवर्णं वश्याकर्षप्रदं स्मरेत् ॥
षडङ्गं षट्स्वरैर्न्यस्य जगन्मोहनकारकम् ।

ध्यानम्—

प्रावृड्घनश्यामलमब्जलोचनं
बर्हावतंसं शरदिन्दुवर्चसम् ।
आश्लिष्टगोपीजनबाहुमध्यगं
वन्दे मुकुन्दं मुनिसङ्घसेवितम् ॥

ॡकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवो मदनगोपालो रें बीजं शक्तिरीं तथा ॥
यं कीलकं एं कवचं श्यामवर्णं विभुं स्मरेत् ।
षडङ्गं षट्स्वरैर्न्यस्य वश्याकर्षादिमोहनम् ॥

ध्यानम्—

अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचीप्रसारेक्षणम् ।

आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभाङ्गिलसितं ध्यायेज्जगन्मोहनम् ॥
एकारस्य ऋषिर्व्यासः पङ्क्तिश्छन्दो विभुं शुभम् ।
उपेन्द्रो देवता चैव ऐंबीजं शक्तिपं तथा ॥
दं कीलकं रं कवचं श्वेतवर्णं निधिप्रदम् ।
षडङ्गं षट्स्वरैर्न्यस्य जयार्थं सततं स्मरेत् ॥

ध्यानम्—

चक्रशङ्खगदापद्मधरं तं विश्वरूपिणम् ।
रक्ताभरणभूषाङ्गमुपेन्द्रं सततं भजे ॥
ऐकारस्य ऋषि ब्रह्मा छन्दोऽनुष्टुभ एव च ।
नीला च देवता चैव ऐं बीजं विश्वरूपकम् ॥
स्त्रीं शक्तिः कीलकं लं च नं कवचं श्वेतवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य सर्वविद्याप्रदं स्मरेत् ।

ध्यानम्—

विद्यापरोवरोदेवीं सर्वदानन्दरूपिणीम् ॥
सर्वाभरणभूषाङ्गीं नमो नीलां हरिप्रियाम् ।
औकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवताऽहं वासुदेवः औं बीजं शक्तिश्रीं तथा ॥
लं कीलकं वं कवचं यमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसिद्धिप्रदं स्मरेत् ॥

ध्यानम्—

आत्मेश्वरं विभुं शान्तं अच्युतं परमं प्रभुम् ।
अनन्तमव्ययं शान्तं वासुदेवं तमाश्रये ॥

अंकारस्य ऋषिर्ब्रह्मा छन्दो गायत्र उच्यते ।
देवता परमात्मा च अं बीजं शक्तिमं तथा ॥
श्रीं कीलकं ह्रीं कवचं लमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसृष्टिकरं स्मरेत् ॥

ध्यानम्—
अनन्तमव्ययं शान्तं विश्वाक्षं विश्वतोमुखम् ।
सहस्रशिरसं देवं वासुदेवं विभुं भजे ॥
अःकारस्य ऋषिः स्रष्टा छन्दोऽनुष्टुप्तथाब्जज ।
देवताप्यच्युतः प्रोक्तः अंबीजं शक्तिरुं तथा ॥
यं कीलकं वं कवचं शुक्लवर्णं स्मरेत्प्रभुम् ।
षडङ्गं षट्स्वरैः न्यस्य सृष्ट्यर्थं कमलासन ॥

ध्यानम्—
श्रीभूमिनीलासहितं सर्वाभरणभूषितम् ।
सर्वाकारं भजेद्देवं शाश्वतं शिवमच्युतम् ॥

इति श्री पाञ्चरात्रे शेषसंहितायां मन्त्राक्षरवर्णने
स्वरवर्णनं नाम द्वितीयोऽध्यायः

---

### व्यञ्जनाक्षरमन्त्रऋष्यादिः

ककारस्य ऋषिश्शम्भुः गायत्री छन्द उच्यते ।
परात्परो वासुदेवः देवता कं च बीजकम् ॥
श्रीं शक्तिः श्रीं कीलकं च ऐं कवचं विश्वरूपिणम् ।
लमस्त्रं रक्तवर्णं च विभुं सर्वफलप्रदम् ॥
सर्वैश्वर्यप्रदं नृणां सृष्टिस्थित्यन्तकारकम् ।
सर्वशत्रुप्रशमनं स्मरेद्देवं चतुर्मुख ॥

ध्यानम्—

सहस्रशिरसं देवं विश्वाक्षं विश्वतोमुखम् ।
परात्परं वासुदेवं तेजोमयविभुं भजे ॥

रुद्रो मुनिः खकारस्य पङ्क्तिश्छन्द उदाहृतम् ।
ज्वालानृसिंहो देवता खं बीजं शक्तिहं तथा ॥

नं कीलकं जं कवचं रमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य संहारे मरणे स्मरेत् ॥

ध्यानम्—

उद्यद्भास्वत्सहस्रप्रभमशनिनिभं त्र्यक्षरैर्विस्फुरन्तं
वह्नावह्वायविद्युत्ततिविततसटाभीषणं लक्षणैश्च ।
दिव्यैरांदीप्तदेहं निशितलसलसद्बाहुदण्डैरनेकैः
नित्यं संभिन्नदैत्येश्वरतनुतनितं नारसिंहं नमामि ॥

गकारस्य ऋषिर्ब्रह्मा पङ्क्ति श्छन्दस्तथाब्जज ।
गरुडो देवता प्रोक्तः गं बीजं शक्तिलं विभुम् ॥

वं कीलकं यं कवचं रमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वव्याधिविषापहम् ॥

ध्यानम्—

वह्न्यन्ताग्नौ हुताशाक्षरकलितगतं पञ्चभूतात्मवर्णं
क्लृप्ताकल्पे फणीन्द्रे कृतमभयकरं पद्मनेत्रं सुवक्त्रम् ।
पुष्टाहिच्छेदखण्डस्फुरदखिलविषप्रोक्षणप्राणिभूतं
प्राणिश्रेण्या परीतं विभुममृतमयं पक्षिराजं भजेऽहम् ॥

ऋषिश्शिवो घकारस्य छन्दोऽनुष्टुप्तथैव च ।
देवता घोरनृहरिः घं बीजं शक्तिर्ह्रीं तथा ॥

रं बीजं नं च कवचं यमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेद्विद्वेषकर्मणि ॥

ध्यानम्—

तप्तहाटककेशान्तज्वलत्पावकलोचन ।
वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥

ङकारस्य ऋषिश्शम्भुः विराट्छन्दस्तथाब्जज ।
देवता शार्ङ्गपाणिश्च एं बीजं शक्तिरैं तथा ॥
पं कीलकं णं कवचं आमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदस्त्रफलप्रदम् ॥

ध्यानम्—

आकर्णमाकृष्टधनुर्गुणोद्यद्ब्रह्मास्त्रलक्षीकृतराक्षसेन्द्रम् ।
रथाधिरूढं रणरङ्गधीरं रामं भजे रक्तसरोरुहाक्षम् ॥

चकारस्य ऋषिर्ब्रह्मा त्रिष्टुप्छन्दो विभुं हरिम् ।
देवता च हयग्रीवः चं बीजं शक्तिरुं तथा ॥
गं कीलकं भं कवचं यमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वविद्याप्रदं स्मरेत् ॥

ध्यानम्—

वन्दे पूरितचन्द्रमण्डलगतं श्वेतारविन्दासनं
मन्दाकिन्यमृताब्जकुन्दकुमुदस्मेरेन्दुहासं हरिम् ।
मुद्रापुस्तकशङ्खचक्रविधृतश्रीमञ्जुजामण्डलं
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥

छकारस्य ऋषिर्ब्रह्मा त्रिष्टुप्छन्दस्तथाब्जज ।
देवता वामनः प्रोक्तः चं बीजं शक्तिमः तथा ॥

मं कीलकं वं कवचं नमस्त्रं शुक्लवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदुच्चाटकारकम् ॥

ध्यानम्—

ज्योतिर्मयं दण्डधरं रक्ताभं छत्रधारिणम् ।
यज्ञसूत्रधरं देवं वामनं सततं भजे ॥
जकारस्य ऋषिर्विष्णुर्जगती छन्द उच्यते ॥
जनार्दनो देवता च जं बीजं शक्तिनं तथा ॥
दं कीलकं रं कवचं अमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सर्वास्थितिप्रदम् ॥

ध्यानम्—

श्रीभूमिसहितं देवं शङ्खचक्रगदाधरम् ।
सर्वाभरणभूषाढ्यं जनार्दनविभुं भजे ॥
झकारस्य ऋषिर्व्यासः पङ्क्तिश्छन्द स्तथाब्जज ।
देवता केशवस्साक्षात् सं बीजं शक्तिमं विभुम् ॥
शं कीलकं यं कवचं अमस्त्रं शुक्लवर्णकम् ।
षडङ्गं पट्स्वरैर्न्यस्य चिन्तयेत्क्लेशनाशनम् ।

ध्यानम्—

शङ्खचक्रधरं देवं विभुं पद्मदलाधरम् ।
पीताम्बरधरं वन्दे केशवं क्लेशनाशनम् ॥
ञकारस्य ऋषिश्शम्भुः गायत्री छन्द उच्यते ।
कूर्मरूपी देवता च आं बीजं शक्तिमं तथा ॥
लं कीलकं मं कवचं रमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदुद्धारकारकम् ॥

ध्यानम्—

शङ्खचक्रधरं देवं वनमालाविराजितम् ।
भजे सर्वधरं धीरं कूर्मरूपं जनार्दनम् ॥

टकारस्य ऋषिः ब्रह्मा विराट्छन्दस्तथाब्जज ।
श्रीरामो देवता चैव टं बीजं शक्तिशं तथा ॥

रं कीलकं रं कवचं वमस्त्रं श्यामवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदैश्वर्यदायकम् ॥

ध्यानम्—

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोरग्नयादि कोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराठ्तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

ठकारस्य ऋषिश्शम्भुः गायत्री छन्दं उच्यते ।
श्रीविट्ठलो देवता च ठं बीजं शक्ति लं तथा ॥

वं कीलकं मं कवचं लमस्त्रं कृष्णवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सृष्ट्यादिकारणम् ॥

ध्यानम्—

सर्वशक्तिकरं धीरं सर्वसंहारकारणम् ।
सर्वस्थितिकरं देवं विट्ठलं सततं भजे ॥

डकारस्य ऋषिर्ब्रह्मा जगतीछन्द उच्यते ।
गरुडो देवता प्रोक्तो डं बीजं शक्तिरों तथा ॥

रं कीलकं गं कवचं यमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सर्वविषापहम् ॥

ध्यानम्—

चतुर्भुजमुदाराङ्गं धरणीवरदाभयम् ।
सर्वाभरणभूषाङ्गं गरुडं सुविभुं भजे ॥
ढकारस्य ऋषिर्व्यासः त्रिष्टुप्छन्द उदाहृतम् ।
सुदर्शनो देवता च ढं बीजं शक्तिफं तथा ॥
दं कीलकं सं कवचं शमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदुच्चाटकारकम् ॥

ध्यानम्—

सहस्रादित्यसंकाशं सहस्रवदनं विभुम् ।
सहस्रदोस्सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥
शिवो मुनिर्णकारस्य पङ्क्तिश्छन्दस्तथाब्जज ।
महाविष्णुर्देवता च णं बीजं शक्तिषं तथा ॥
मं कीलकं षं कवचं वमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेन्मुक्तिफलप्रदम् ॥

ध्यानम्—

मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥
तकारस्य ऋषी रुद्रः त्रिष्टुप्छन्दस्तथाब्जज ।
देवता चाच्युतः प्रोक्तः तं बीजं शक्तिरं तथा ॥
चं कीलकं टं कवचं रमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वाकर्षकरं स्मरेत् ॥

ध्यानम्—

पाशाङ्कुशधरं देवं शङ्खचक्रधरं विभुम् ।
श्रीभूमिनीलासहितं अच्युतं सततं भजे ॥

थकारस्य ऋषिर्ब्रह्मा जगतीच्छन्द एव च ।
देवता च जगन्नाथः थं बीजं शक्तिरं तथा ॥
कं कीलकं यं कवचं लमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैन्र्यस्य स्थितिप्रदविभुं स्मरेत् ॥

ध्यानम्—

शङ्खचक्रधरं देवं सर्वाभरणभूषितम् ।
पीताम्बरधरं सौम्यं जगन्नाथं सदा भजे ॥

दकारस्य ऋषिस्सूर्यः पङ्क्तिश्छन्दस्तथाऽब्जज ।
दामोदरो देवता च दं बीजं शक्तिरीं यथा ॥
मं कीलकं कं कवचं लमस्त्रं शुक्लवर्णकम् ।
षडङ्गं षट्स्वरैन्र्यस्य स्मरेद्विद्वेषकारकम् ॥

ध्यानम्—

चक्रशार्ङ्गधरं देवं श्रीवत्सादिविभूषितम् ।
कृष्णमालाम्बरधरं भजे दामोदरं विभुम् ॥

धकारस्य ऋषिश्चन्द्रो विराट्छन्दः विभुर्महान् ।
देवता माधवः प्रोक्तो धं बीजं शक्तिश्रीं तथा ।
मं कीलकं वं कवचं यमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैन्र्यस्य स्मरेन्मोहनकारणम् ॥

ध्यानम्—

श्रीभूमिनीलासहितं चक्रशार्ङ्गधरं विभुम् ।
मुक्ताभरणभूषाढ्यं माधवं सततं भजे ॥

नकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवतानारसिंहश्च नं बीजं शक्तिहं तथा ॥

ओं कीलकं मं कवचं रमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसिद्धिप्रदायकम् ॥

ध्यानम्—

शङ्खचक्रधरं देवं भीषणं चोग्रविग्रहम् ।
योगपट्टपिनद्धाङ्गं नृहरिं सततं भजे ॥
पकारस्य ऋषिस्सूर्यः त्रिष्टुप्छन्दस्तथाब्जज ।
देवता पद्मनाभश्च पं बीजं शक्तिर्ह्रीं तथा ॥
दं कीलकं नं कवचं ममस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसृष्टिकरं स्मरेत् ॥

ध्यानम्—

चक्रपद्मधरं देवं वनमालाविभूषितम् ।
श्रीभूमिनीलासहितं पद्मनाभं विभुं भजे ॥
फकारस्य ऋषिश्चन्द्रः पङ्क्तिश्छन्द उदाहृता ।
देवता भीमनृहरिः फं बीजं शक्तिर्भं तथा ॥
नं कीलकं मं कवचं अमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदुच्चाटकारकम् ॥

ध्यानम्—

दंष्ट्राकरालमत्युग्रं चतुश्चक्रधरं विभुम् ।
तं भजे भीमनृहरिं विश्वाक्षं विश्वतोमुखम् ॥
बकारस्य ऋषिश्शम्भुः गायत्री च्छन्द उच्यते ।
देवता बलरामश्च बं बीजं शक्तिश्रीं तथा ॥
लं कीलकं दं कवचं वमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदाकर्षकारकम् ॥

ध्यानम् —

श्वेतवर्णमुदाराङ्गं मुसलं च हलं धरम् ।
मुक्ताभरणभूषाङ्गं बलराममहं भजे ॥
भकारस्य ऋषिस्सूर्यः छन्दोऽनुष्टुप्तथाब्जज ।
देवता भद्रनृहरिः भं बीजं शक्तिभं तथा ॥
दं कीलकं कं कवचं अमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदैश्वर्यदायकम् ॥

ध्यानम्—

शङ्खचक्रधरं देवं पीताम्बरधरं विभुम् ।
श्रीभूमिनीलासहितं भजे भद्रनरंहरिम् ॥
मकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
नारायणो देवता च अं बीजं शक्तिश्रीं तथा ॥
लं कीलकं नं कवचं ममस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदाकर्षकारकम् ॥

ध्यानम्—

शङ्खचक्रधरं देवं सर्वाभरणभूषितम् ।
पुण्डरीकाक्षममलं नारायणमहं श्रये ॥
यकारस्य ऋषी रुद्रश्छन्दोऽनुष्टुभ एव च ।
सङ्कर्षणो देवता च यं बीजं शक्तिण्यं तथा ॥
सं कीलकं कं कवचं षमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदुच्चाटकारकम् ॥

ध्यानम्—

पाशाङ्कुशधरं देवं नीलाभरणभूषितम् ।

संकर्षणविभुं सौम्यं सर्वसिद्धिकरं भजे ॥
रकारस्य ऋषिस्सूर्यः पङ्क्तिश्छन्द उदाहृता ।
देवता वासुदेवश्च रं बीजं शक्तिरीं तथा ॥
दं कीलकं कं कवचं धमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत् सृष्ट्यादिकारणम् ॥

ध्यानम्—

चक्रपद्मधरं देवं वनमालाविभूषितम् ।
श्रीभूमिनीलासहितं वासुदेवं विभुं भजे ॥
लकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
हयग्रीवो देवता च लं बीजं शक्तिश्री तथा ॥
ह्रीं कीलकं एं कवचं यमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेदाकर्षकारकम् ॥

ध्यानम्—

वन्देपूरितचन्द्रमण्डलगतं श्वेतारविन्दासनं
मन्दाकिन्यमृताब्जकुन्दकुमुदक्षीरेन्दुहासं हरिम् ।
मुद्रापुस्तुकशङ्खचक्रविधृतश्रीमद्भुजामण्डलं
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥
वकारस्य ऋषिश्चन्द्रः पङ्क्तिश्छन्द उदाहृता ।
नारायणो देवता च वं बीजंशक्तिश्रीं तथा ॥
एं कीलकं ह्रीं कवचं रमस्त्रं श्वेतवर्णकम् ।
षडङ्ग षट्स्वरैर्न्यस्य स्मरेत्सर्वफलप्रदम् ॥

ध्यानम्—

शङ्खपद्मधरं देवं विभुं चक्रगदाधरम् ।
श्रीभूमिनीलासहितं भजे नारायणं सदा ॥

शकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवता श्रीर्महालक्ष्मीः शं बीजं शक्तिर्ह्री तथा ॥
एं कीलकं लं कवचं वमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सर्वार्थसिद्धिदम् ॥

ध्यानम्—

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥
षकारस्य ऋषिश्शंभुः त्रिष्टुप्छन्दस्तथाऽब्जज ।
देवता श्रीहृषीकेशः शं बीजं शक्तिरी तथा ॥
हं कीलकं शं कवचं कमस्त्रं शुक्लवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सर्वविषापहम् ॥

ध्यानम्—

चक्रपाशधरं देवं चन्द्रकोटिसमप्रभम् ।
मुक्ताभरणभूषाङ्गं हृषीकेशं विभुं भजे ॥
सकारस्य ऋषिस्सूर्यः गायत्री छन्द उच्यते ।
देवता चक्रराजश्च सं बीजं शक्तिषं तथा ॥
एं कीलकं यं कवचं यमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसिद्धिकरं स्मरेत् ॥

अव्याद्भास्करसप्रभाभिरुचिभिस्सर्वा दिशो भासयन्
भीमाक्षस्फुरदट्टहासविलसद्दंष्ट्राप्रदीप्तानन ।
दोर्भिश्चैव धनुर्गदाब्जमुसलप्रासांश्च पाशाङ्कुशान्
बिभ्रत्पिङ्गसरोमनाथ भगवान् चक्रासिधारी हरिः ॥

हकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवता भूरिति प्रोक्ता हं बीजं शक्तिश्रीं तथा ॥
क्लीं कीलकं णें कवचं यमस्त्रं श्यामवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य सर्वसिद्धिप्रदं स्मरेत् ॥

ध्यानम्—

विष्णुपत्नीं महीं देवीं माधवी माधवप्रियाम् ।
लक्ष्मीप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥
ळकारस्य ऋषिश्शम्भुः छन्दोनुष्टुप् तथैव च ।
देवः प्रळयनृहरिः ळं बीजं शक्तिभं तथा ॥
मं कीलकं यं कवचं लमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्संहारकारकम् ॥

ध्यानम्—

कालानलसमप्रख्यं द्वात्रिंशच्चक्रधारिणम् ।
भजेप्रळयनृहरिं पिङ्गाक्षं विश्वरूपिणम् ॥
क्षकारस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
देवता श्रीनृसिंहश्च क्षं बीजं शक्तिश्रीं तथा ॥
भं कीलकं एं कवचं क्लीमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सर्वफलप्रदम् ॥

ध्यानम्—

श्रीभूमिनीळासहितं पिङ्गाक्षं विश्वरूपिणम् ।
सर्वाभरणभूषाङ्गं सर्वेशं नृहरिं भजे ॥
वसिष्ठश्च ऋषिः बिन्दोः त्रिष्टुप्छन्दस्थथाब्जज ।
सुदर्शनो देवता च ओं बीजं शक्तिमं तथा ॥

लं कीलकं अं कवचं वमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य स्मरेत्सृष्टिफलप्रदम् ॥

ध्यानम्—

सहस्रादित्यसंकाशं सहस्रवदनं हरिम् ।
सहस्रदोस्सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥
ऋषिर्वसिष्ठो नादस्य जगती छन्द उच्यते ॥
परब्रह्म देवता च नीं बीजं शक्तिश्रीं तथा ।
एं कीलकं क्लीं कवचं ह्रीमस्त्रं रक्तवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य ब्रह्मानन्दकरं स्मरेत् ।

ध्यानम्—

तेजःपुञ्जं च पादादिरूपं सकलनिष्कलम् ॥
नारायणं विभुं शान्तं विश्वरूपं भजे सदा ।
पराशरो ऋषिर्यष्टेश्छन्दो गायत्रमब्जज ॥
हयग्रीवो देवता च अं बीजं शक्तिरुन्तथा ।
मं कीलकं नीं कवचं स्रीमस्त्रं रक्तवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य सर्वसिद्धिकरं स्मरेत ।

ध्यानम्—

शंखचक्रधरं देवं पीताम्बरधरं विभुम् ॥
श्रीभूमिनीलासहितं हयग्रीवमहं भजे ।
अकारस्तत्स्वयंविष्णुः मकारो जीव उच्यते ॥
अर्धचन्द्राकृतिर्यष्टिर्योजयेत्कमलासन ॥
सर्वदा सर्वकार्येषु पूर्वोक्तं प्रणवं स्मरेत् ।
मन्त्राणां योजयेदादौ मन्त्रमन्त्रार्थसिद्धये ॥

एतद्ब्रह्मेत्युपासीत सृष्टिस्थित्यन्तहेतवे ।
ज्ञाने कर्मणि भक्तौ च मोक्षार्थे तु नमोन्तकम् ॥
सर्वसिद्धिकरं नृणां सर्वोपद्रवनाशनम् ।
सर्वसंपत्प्रदं सौम्यं मन्त्रशास्त्रं तथाऽब्जज ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां मातृकाक्षरवर्णनं
नाम तृतीयोऽध्यायः

---

## नृसिंहजयन्ती

शेषः—

त्रेतादावादिकल्पे सितकमलभुवो माधवे मासि पक्षे
शुक्ले सान्ध्ये च योगे वणिज सुकरणे भूततिथ्यां मरुद्भे ।
मान्दे वारे प्रदोषे कनककशिपुसंहारतेजोमयोऽसौ-
स्तंभाद्व्यक्तो नखाग्रैस्तमहनदखिलत्राणहेतुर्नृसिंहः ॥

नारसिंहचतुर्दश्यां ब्राह्मणो मन्त्रवित्तमः ।
ब्राह्मे मुहूर्ते चोत्थाय गुरुवन्दनपूर्वकम् ॥
अतितीक्ष्णमहाकाय कल्पान्तदहनोपम ।
नृसिंहाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥
ब्राह्मे मुहूर्ते चोत्थाय भगवन्नामकीर्तनम् ।
आचार्यकीर्तनं कुर्याद्गच्छेद्वाऽथ नदीं द्विजः ॥
स्नात्वा विधिवदाचम्य शौचाचमनपूर्वकम् ।
कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेत् ॥
सच्छिद्रमूर्ध्वपुण्ड्राणि पवित्रं च द्विजोत्तमः ।
नित्यनैमित्तिकं कुर्यात्स्वगृह्योक्तविधानतः ॥

स्वगृहे तु शुचौ देशे मण्डपं कारयेद्बुधः ।
फलमूलादिवस्त्रैश्च पुष्पाद्यैश्चामरैस्तथा ॥
मण्टपं समलंकृत्य सुधाचूर्णादिना शुचिः ।
तन्मध्ये नृहरिं देवं पूजयेद्विधिनाऽब्जज ॥
श्रीभूमिनीळादिभिस्साङ्गैः सायुधैः परिवारकैः ।
देवस्य पूर्वदिग्भागे इध्माधानादिपूर्वकम् ॥

स्वाग्निमावाह्य विधिवाद्बिल्वपत्रैर्मधुत्रिभिः ।
तत्फलैः कमलैर्जुहुन्मन्त्रराजेन मन्त्रवित् ॥
अग्नेश्च पूर्वदिग्भागे कुम्भस्योक्तविधानतः ।
तत्कुम्भे नृहरिं सौम्यं लक्ष्म्याद्यैर्विश्वतोमुखं ॥
कूर्चपल्लवरत्नाद्यैः देवमावाह्य मन्त्रवित् ।
यामत्रयं प्रकुर्वीत जपहोमार्चनादिकम् ॥

आदौ शतं जपेद्ध्यायन् अर्चयेत्तदनन्तरम् ।
तत्संख्यया जपेदग्निकुम्भं स्पृष्ट्वा जपेत्ततः ॥
सूर्यास्तमयकाले च मन्त्रवित्कुम्भवारिणा ।
तन्मन्त्रमुच्चरन् स्नात्वा शुद्धवस्त्राणि धारयेत् ॥
पद्माक्षं तुलसीमालामूर्ध्वपुण्ड्राणि धारयेत् ।
सायं संध्यामुपासीत गायत्रीं मूलविद्यया ॥

अष्टाविंशतिकं जप्त्वा समाप्य विधिवच्छुचिः ।
नृहरेस्सन्निधौ स्थित्वा पुण्याहं वाचयेद्बुधः ॥
अर्चयेद्गन्धपुष्पाद्यैरभिषेचनपूर्वकम् ।
षोडशैरुपचारैश्च तन्मन्त्रेणैव मन्त्रवित् ॥

पायसापूपभक्ष्याद्यैः गुडमिश्ररसायनैः ।
गुडमुद्गतिलान्नाद्यैः प्रदोषे तन्निवेदयेत् ॥
श्रीभूमिनीळाचक्रादीन् परिवारान् समर्चयेत् ।
तथा यन्त्रं समभ्यर्च्य कुर्यात्पुष्पाञ्जलिं ततः ॥
तच्छेषैर्देववद्ध्यात्वा वैष्णवान्पूजयेत्ततः ।
तन्मन्त्रेण च गायत्र्या दद्यादर्ध्यत्रयं शुचिः ॥
रिपुं हिरण्यवद्ध्यात्वा स्वे देह रणसिंहकम् ।
अन्तर्बहिस्तथा ध्यात्वा षट्कोणे सर्वतोमुखम् ॥
अपरे चक्रराजं च ध्यायन्मन्त्रविदब्जज ।
अर्ध्यान्ते पूजयेद्बिम्ब यन्त्रेचाग्नौ लिखेद्बुधः ॥
द्वात्रिंशत्संख्यया वापि अष्टाविंशतिमेव वा ।
दश पञ्च त्रीणि वापि अर्घ्यपूजादिकं क्रमात् ॥
तच्छेषैर्देववद्ध्यात्वा वैष्णवान्भोजयेत्ततः ।
रात्रौ जागरणं कुर्याज्जपपूजादिहोमकैः ॥
ब्राह्मे मुहूर्ते संप्राप्ते नित्यनैमित्तिकं क्रमात् ।
कृत्वा सम्यग्विधानेन जपपूजादिकं क्रमात् ॥
अष्टोत्तरं सहस्रं वा शतमष्टोत्तरं तु वा ।
जुहुयान्मन्त्रराजेन यजेदर्घ्यैः त्रिधात्रिधा ॥
हुत्वाऽऽभ्यां हृदयाम्भोजे जयार्थी मन्त्रवित्तमः ।
नृसिंहप्रतिमादानं यथाशक्ति विधानतः ॥
तन्मन्त्रजपसंसिध्यै दद्याद्वस्त्रादिभिस्ततः ।
वैश्वदेवादिकं कृत्वा वैष्णवैस्सह भोजयेत् ॥

वैष्णवानर्चयेत्पुष्पैः गन्धाक्षतसुगन्धिभिः ।
दक्षिणाद्यैः प्रयोज्यैश्च मन्त्रवित्पूजयेद्द्विजः ॥
अष्टोत्तरसहस्रं तु जपेन्मन्त्रविदब्जज ।
चातुरङ्गावधानेन प्रत्यहं मितभुक् शुचिः ॥
शत्रुक्षयं राज्यसिद्धिं लभते वत्सरत्रयात् ।
सौदर्शनस्य मन्त्रस्य एवमेव विधीयते ॥
रामकृष्णवराहादिगरुडस्यैवमेव हि ।
तत्तज्जयन्त्यामारभ्य सम्यक्कुर्यात्स मन्त्रवित् ॥
शत्रुक्षयं राज्यलाभं लभते वत्सरत्रयात् ।
अष्टैश्वर्यादिकं सर्वं लभते नात्रसंशयः ॥
सापि भोगान्सुसंप्राप्य विष्णुसायुज्यमाप्नुयात् ।
किमत्र बहुनोक्तेन मोक्षार्थी सततं जपेत् ॥
कुर्वीरन् गुरुणा ब्रह्मन् क्षत्रविट्शूद्रजातयः ।
जयमाप्नोति सर्वत्र ब्रह्म तावदनुत्तमम् ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां चतुर्थोऽध्यायः.

---

## मत्स्यजयन्ती

शेषः---

कृते युगे चैत्रमासे अग्नितिथ्यां तु युग्मभे ।
बन्धनर्क्षे सोमवारे धर्मसंस्थापनाय च ॥
मत्स्यावतारो ह्यभवन्मधुकैटवधाय च ।
तत्तिथौ विधिना ब्रह्मन् जयन्त्युक्तविधानतः ॥

मत्स्यरूपं हरिं पूज्य मत्स्यमन्त्रं जपेद्बुधः ।
मत्स्यमन्त्रेण चार्घ्यन्तु दद्याद्द्वादशसङ्ख्यया ॥
मधुकैटरिपुं ध्यात्वा मत्स्यं षट्कोणसंस्थितम् ।
तं हरिं मनसा ध्यायन् जपपूजादिकं क्रमात् ॥
कुर्वीत मत्स्यप्रतिमां ब्रह्मनिष्ठाय चार्पयेत् ।
यः करोति विशुद्धात्मा इहजन्मनि सर्वदा ॥
सर्वशत्रून् विजित्यासौ सर्वविद्याश्च विन्दति ।
तारं ह्रीं वायुसंयुक्तमङ्के विषसमन्वितम् ॥
मत्स्याय नम इत्युक्त्वा मत्स्यमन्त्रं जपेद्बुधः ।
अयुतं तज्जयन्त्यां तु जयन्त्युक्तविधानतः ॥
कुर्याद्धोमादिकं सर्वं पूजादीन् सुविचक्षणः ।
मन्त्रस्यास्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ॥
मत्स्यरूपी हरिर्देवो नमश्शक्तिस्तथाब्जज ।
मन्त्रैश्चैव षडङ्गन्तु कुर्यात्सम्यगनुत्तमम् ॥
शङ्खचक्रधरं देवं षट्कोणान्तस्थविग्रहम् ।
मत्स्यरूपहरिं वन्दे सर्वमङ्गळदायकम् ॥
इदं रहस्यं परमं मन्त्रं सर्वार्थदायकम् ।
सकृत्स्मरणमात्रेण नरस्सिद्धिं लभेत्सदा ॥
होमदानादिमार्गेण तज्जयन्त्यां यजन्ति ये ।
सोपभोगान्सुसंप्राप्य ते यान्तिपरमं पदम् ॥

## हयग्रीवजयन्ती

तत्कृते मीनमासे तु भन्द्यर्क्षे युग्मभान्तके ।
वेदमार्गप्रतिष्ठायै धर्मसंस्थापनायच ॥

स्थित्यर्थमाविरासीद्धि हयग्रीवः स्वयं हरिः ।
नारसिंहजयन्त्युक्तविधिना सम्यगब्जज ॥

कुर्वीत तज्जयन्त्यान्तु हयग्रीवं प्रपूजयेत् ।
तन्मन्त्रमयुतं चप्यं जपयन्त्रादिसंयुतम् ॥

होमं कुम्भाभिषेकन्तु दानं तत्प्रतिमां बुधः ।
कुर्वीत विधिवद्भक्त्या हयग्रीवमनुं जपेत् ॥

तल्लग्ने आरभेद्विद्वान् गुरुवन्दनपूर्वकम् ।
तत्क्षणादेव सिद्धिस्स्यात्सर्वविद्या च सिध्यति ॥

तदुत्सवे लभेत्सर्वं निर्विघ्नेनापि भूपतिः ।
सान्तं षान्तं बीजयुक्तं प्रणवान्तसमन्वितम ॥

हयग्रीवमिमं मन्त्रं सर्वविद्याप्रदायकम् ।
जपेदेकाक्षरं सम्यगनुष्टुभमनुं तथा ॥

ब्रह्मा ऋषिस्ततश्छन्दो देवीगायत्रमुच्यते ।
देवता च हयग्रीवो भं बीजं शक्तिकं तथा ॥

सं कीलकं मं कवचं डमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य जपेद्विद्याप्रदायकम् ॥

ध्यानम्—

वन्दे पूरितचन्द्रमण्डलगतं श्वेतारविन्दासनम्
मन्दाकिन्यमृतांशुकुन्दकुमुदक्षीरेन्दुहासाननम् ।
मुद्रापुस्तकशङ्खचक्रविधृतश्रीमद्भुजामण्डलम्
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥

हयग्रीवजयन्त्यादौ सर्वकर्मार्थसिद्धये ।
सर्वविघ्नविनाशार्थं धर्ममोक्षार्थसिद्धये ॥
यः करोति हयग्रीवजयन्तीं सम्यगब्जज ।
ससर्वलोकान् जयति सर्वविद्यागुरुर्भवेत् ॥
देवविप्रः सुधीश्च स्यात् स याति परमं पदम् ।
सौदर्शनं नारसिंह्मं रामं कार्ष्णं सुपर्णकम् ॥
मन्त्रार्थं सततं ध्यात्वा भावादौ दश वा जपेत् ।
मूलादिसर्वमन्त्राणामङ्गमन्त्राणि चाब्जज ॥
हयग्रीवजयन्तीं च सम्यक्कुर्याद्विचक्षणः ।
तस्मात्सर्वप्रयत्नेन क्षत्रियाणां च तद्विधिः ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां पञ्चमोध्यायः.

---

## कूर्मजयन्ती

शेषः—

ततः कृतयुगेऽश्विन्यां कन्यायां मासि वृश्चिके ।
लग्नेऽभूद्भूधरार्थाय कूर्मरूपो हरिः परः ॥
इच्छेच्च लोकरक्षां यः कूर्ममन्त्रं जपेद्बुधः ।
तज्जयन्तीं प्रकुर्वीत राज्यकाङ्क्षी विशेषतः ॥
श्रीमद्रामजयन्त्युक्तजपहोमार्घ्यपूर्वकम् ।
यन्त्रदानादिकं सर्वं कुर्यात्सम्यग्विचक्षणः ॥
श्रीं बीजं कूं च उद्धृत्य कूर्माय नम इत्यपि ।
जपेन्मन्त्रमिमं ब्रह्मन् सर्वस्थितिफलप्रदम् ॥

ऋषिर्धाताऽस्य मन्त्रस्य छन्दस्त्रिष्टुप्च देवता ।
कूर्मो हरिश्च बीजं श्रीं शक्तिश्च नम इत्यपि ॥
तन्मन्त्रेण षडङ्गन्तु प्रत्येकं पदमुच्चरन् ।
कुर्यात्सर्वप्रयत्नेन तज्जयन्तीं स्थितिप्रदाम् ॥

इति श्रीपाञ्चरात्रे शेषसंहितायांषष्ठोऽध्यायः.

---

## वराहजयन्ती

शेषः—

वृश्चिके मास्यनूराधे कृष्णपक्षे कृतान्तके ।
वराहरूपी भगवान् मेषलग्ने हरिस्स्वयम् ॥
वराहं तज्जयन्त्यान्तु पूजयेत्कमलासन ।
ध्यायन् वराहं तन्मन्त्रजयन्ती तद्दिने भवेत् ॥
रामचन्द्रजयन्त्युक्तहोमदानादिपूजनम् ।
तन्मन्त्रेणैव चार्चादीन् कुर्यात्सम्यग्विचक्षणः ॥
हंकारं तमुकारं च बिन्दुनादसमन्वितम् ।
वराहं सर्वदेवानां लक्ष्मीधनंधराप्रदम् ॥
भूवराहेण संयोज्य जयन्त्यां सर्वदा जपेत् ।
कुर्यात् त्र्यहेष्वेव स हीहैवाभिजनवान्भवेत् ॥
सर्वान्कामानवाप्नोति विष्णुसायुज्यमाप्नुयात् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द एव च ॥
वराहो देवतेत्युक्ता सं बीजं शक्तिरित्यपि ।
स्वाहान्तं मं कीलकं वं कवचं श्वेतवर्णकम् ॥

रमस्त्रमिति विज्ञाय षडङ्गं मन्त्रमुच्यते ।
पर्यायेण पदैस्सम्यक् न्यसेद्विद्वान् विचक्षणः ॥

ध्यानम्—

भूवराह महोत्साह सर्वशत्रुविनाशन ।
वैरिसंहार मां रक्ष देहि दापय मे श्रियम् ॥
य इच्छति महाभोगं भुक्तिमुक्त्यादिसंवृतम् ।
कर्मज्ञानादिसिद्ध्यर्थं वराहं पूजयन्जपेत् ॥
तस्मै मुक्तिं प्रदास्यामि किंपुनर्भोगसम्पदः ॥

इति पाञ्चरात्रे शेषसंहितायां सप्तमोऽध्यायः.

———

## वामनजयन्ती

शेषः—

त्रेतायां श्रावणे मासि द्वादश्यां श्रवणे सिते ।
वामनोऽभूद्धरिः पक्षे क्षत्रविड्बलनाशनः ॥
सिंहलग्ने सौम्यवारे धर्मसंस्थापनाय च ।
तन्मन्त्रेणार्चयेद्देवं यन्त्रकुम्भादिपूर्वकम् ॥
नारसिंहजयन्त्युक्तक्रमेणैव विचक्षणः ।
श्रीं बीजं वारुणं बीजं वामनाय नमस्तथा ॥
जपेन्मन्त्रमिमं सौम्यं सर्वसम्पत्प्रदायकम् ।
कुर्वीत तज्जयन्त्यां तु सहस्रं वा शतं तु वा ॥
यो जपेत्प्रत्यहं भक्त्या स तु राज्यं लभेत्सदा ।
ऋषिर्धाताऽस्य मन्त्रस्य छन्दोनुष्टुभ एव च ॥

देवता वामनः प्रोक्तः श्रीं बीजं शक्तिरीं तथा ।
तन्मन्त्रेण षडङ्गं तु कुर्यात्तद्दिने तदा ॥

ध्यानम्—

कमण्डलुं यज्ञसूत्रं शिखां छत्रं च धारिणम् ।
तेजःपुञ्जमयं देवं वामनं पुरुषं भजे ॥

### त्रिविक्रमजयन्ती

तद्युगे श्रावणे मासि द्वादश्यां श्रवणे तथा ।
तत्तिथौ सिंहलग्नान्ते आविरासीत्त्रिविक्रमः ॥
श्रीनृसिंहजयन्त्युक्तक्रमेणैव द्विजोत्तमः ।
कुर्यात्पूजादिकं सर्वं होमदानादिकं क्रमात् ॥
त्रैविक्रमेण मन्त्रेण पूजाद्याः कुरु चाब्जज ।
मायाबीजं समुद्धृत्य त्रीं त्रिविक्रमायेत्यपि ॥
इदं रहस्यं परमं नमोन्तं सततं जपेत् ।
तज्जयन्त्यां सहस्रं तु जपेद्विप्रवरश्शुचिः ॥
ऋषिःस्रष्टाऽस्य मन्त्रस्य त्रिष्टुप्छन्दः प्रजापते ।
त्रिविक्रमो देवता च ह्रीं बीजं शक्तिरीं तथा ॥
लं कीलकं वं कवचं यमस्त्रं रक्तवर्णकम् ।
तन्मन्त्रेण षडङ्गं तु कुर्यान्मन्त्रप्रदस्तदा ॥

ध्यानम्—

शङ्खचक्रधरंदेवं विभुं तेजोमयं प्रभुम् ।
त्रिविक्रमं वासुदेवं भजे तं विश्वतोमुखम् ॥
एतन्मन्त्रस्य माहात्म्यं वक्तुं श्रोतुंचदुर्लभम् ।
तस्मात्सर्वप्रयत्नेन देवर्षिब्राह्मणादयः ॥

एतन्मन्त्रं जपेयुः वै जयन्तीं कुरु सर्वदा ।
तस्य मृत्युभयं नास्ति तस्य साध्यं जगत्रयम् ॥
तस्य मुक्तिं प्रदास्यामि तस्य राज्यं ददाम्यहम् ।
सौदर्शनं नारासिंहं रामं कृष्णं त्रिविक्रमं ॥
लक्ष्मीनारायणं सम्यगर्हाण्येव तदाऽब्जज ।

इति श्रीपाश्वरात्रे शेषसंहितायामष्टमोऽध्यायः.

---

## रामजयन्ती

शेषः—

त्रेतायां चैत्रमासे तु नवम्यां तु पुनर्वसौ ।
रामावतारमकरोल्लग्नेऽभिजिति यो हरिः ॥
नारसिंहविधानोक्तमण्डपादीन् प्रकल्पयेत् ।
बिम्बयन्त्रादिहोमं च कुम्भं च परिकल्पयेत् ॥
सम्यक् तत्प्रतिमादानं राममन्त्रेण मन्त्रवित् ।
लक्ष्मणः तद्दिने लग्ने अनन्तोऽभूत्स्वयं प्रभुः ॥
ततो भरतशत्रुघ्नौ शङ्खचक्रे च तौ स्वयम् ।
अभूतां तद्दिने लग्ने धर्मसंस्थापनाय च ॥
तद्युगे मासि कन्याया मश्विन्यां शुक्रवासरे ।
स्वयं भूमिश्च सीताऽभूद्यज्ञधर्मार्थसिद्धये ॥
रंकारं हतसंयुक्तं रामाय नम इत्यपि ।
जपेन्मन्त्रमिमं ब्रह्मन् सर्वसिद्धिप्रदायकम् ॥
श्रीं बीजं सम्यगुद्धृत्य सीतायै पदमुद्धरेत् ।
जपेत्तद्वह्निजायान्तं सर्वैश्वर्यप्रदायकम् ॥

लकारं बिन्दुसंयुक्तम् लक्ष्मणाय नमस्तथा ।
प्रीत्यै श्रीरामचन्द्रस्य सर्वसिद्ध्यै जपेन्मनुम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
श्रीरामो देवता प्रोक्तो रां बीजं कमलासन ॥
नं शक्तिर्लं कीलकं स्वं कवचं रमस्त्रकम् ।
श्यामवर्णमिदं प्रोक्तं कुर्यान्मन्त्रपदैर्बुधः ॥
षडङ्गन्तु प्रकुर्वीत सीताराममनुं जपेत् ।

ध्यानम्—

वामे भूमिसुता पुरस्तु हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोरम्नयादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥
अष्टोत्तरसहस्रं तु तज्जयन्त्यां जपेद्बुधः ।
तत्सङ्ख्यया प्रत्यहं तु अष्टोत्तरशतं तु वा ॥
राममन्त्रजपध्यानपरो यो वत्सरत्रयम् ।
तस्य सिद्ध्यन्ति भोग्यानि धनधान्यादिकं सदा ॥
तस्य मुक्तिं प्रदास्यामि ब्रह्मत्वं चाथ वाञ्छितम् ।
रामानुष्टुभमन्त्रेण तज्जयन्त्यां तु तर्पयेत् ॥
अष्टोत्तरशतं वापि अष्टाविंशतिमेव वा ।
रामगायत्रिया चार्घ्यं दद्यात् ध्यायन्विचक्षणः ॥
शत्रून् रावणवत् ध्यात्वा स्वदेहे राममुत्तमम् ।
कुर्याज्जपे तथा होमे मम कर्मसु तर्पणे ॥

एवमुक्तप्रकारेण यः कुर्याद्वत्सरत्रयम् ।
स रामवदिह स्थित्वा विष्णुसायुज्यमाप्नुयात् ॥

इति शेषसंहितायां नवमोध्यायः.

---

## श्रीकृष्णजयन्ती

शेषः—

द्वापरान्ते सिंहमासे रोहिण्यां च विधूद्भवे ।
कृष्णावतारो ह्यभवत् कृष्णपक्षेऽष्टमीयुते ॥
स्वगृहे तु शुचौ देशे मण्डपं कारयेद्बुधः ।
मण्डपं समलंकृत्य वस्त्रचामरपुष्पकैः ॥
तन्मध्ये पूजयेत्कृष्णं साङ्गाभरणसंयुतम् ।
मण्टपात्पूर्वभागे तु कृष्णयन्त्रं तु पूजयेत् ॥
यन्त्रस्य पूर्वदिग्भागे इध्माधानादिपूर्वकम् ।
स्वाग्निमावाह्य विधिवज्जुहुयात् कमलैः घृतैः ॥
नीलोत्पलैः गुग्गुळैश्च मधुत्रयतिलैः फलैः ।
अग्नेश्च पूर्वदिग्भागे कुम्भस्योक्तविधानतः ॥
सुदर्शनं कुम्भमध्ये अवाह्य विधिवच्छुचिः ।
स्मरगोपालमन्त्रेण त्रिषष्टिपरसङ्ख्यया ॥
देवार्चनं यन्त्रपूजां होमं कुम्भाभिमन्त्रणम् ।
कुर्याद्यामत्रयं ब्रह्मन् सायंकाले विशेषतः ॥
नित्यं कर्मसमाप्यैव यामद्वयमतन्द्रितः ।
पूर्वोक्तेनैव विधिना जपपूजाविधीन् क्रमात् ॥

बुधश्चन्द्रोदयात्पूर्वं कृष्णमन्त्रेण मन्त्रवित् ।
पुंसूक्तेन च मन्त्रेण स्नानं तत्कुम्भवारिणा ॥
शुद्धवस्त्रोर्ध्वपुण्ड्राणि धारयेद्भूषणादिकम् ।
चन्द्रोदये तथा कृष्णं स्मरन्मन्त्रमथाब्जज ॥
पुण्याहं वाचयित्वाऽथ देवं संपूजयेत् स्मरन् ।
विविधैः पायसैः भक्ष्यैः फलमूलैश्च लाजकैः ॥
षोडशैरुपचारैश्च परिवारैः सुपूजयेत् ।
सम्यक् तत्कृष्णगायत्र्या दद्यादर्घ्यत्रयं स्मरन् ॥
शत्रुं तत्कंसवत् ध्यात्वा स्वयं तद्विश्वरूपकः ।
तर्पणं कृष्णमन्त्रेण कुर्यात्कृष्णं स्मरन् बुधः ॥
तर्पणं द्वादशं कृत्वा तच्छेषं संस्मरन्मनुम् ।
वैष्णवान्भोजयेत्पश्चात् पूर्ववत् हवनादिकम् ॥
ब्राह्मे मुहूर्ते संप्राप्ते नित्यनैमित्तिकं क्रमात् ।
कृत्वा पूजादिकं सर्वं पूर्ववत् हवनं चरेत् ॥
श्रीकृष्णप्रतिमादानं यथाशक्ति विधानतः ।
कुर्यात्तन्मन्त्रसिद्ध्यर्थं मोक्षश्रीराज्यसिद्धये ॥
स्वयं भुञ्जीत वृद्धाद्यैः वैष्णवैः षड्रसैस्सह ।
वैष्णवान् भोजयित्वाऽथ पुष्पाद्यैः सहदक्षिणैः ॥
अब्दद्वयं तु यः कुर्यात् मन्त्रतन्त्रादिसंयुताम् ।
सम्यक् कृष्णजयन्तीं च जपदानादिकं क्रमात् ॥
अष्टैश्वर्यादिकं सर्वं तस्य सिद्ध्यति सर्वदा ।
इह भोगान् सुसंप्राप्य विष्णुसायुज्यमाप्नुयात् ॥

### बलरामजयन्ती

तद्युगे मासि वैशाखे बुध्नयर्क्षेमीनलग्नके ।
बलरामो हरिस्साक्षात् आविरासीत् स्वयं हरिः ।
तज्जयन्त्यां तथा ब्रह्मन् पूजादीन् कुरु सर्वदा ।।
सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ।
मान्मथं बीजमुद्धृत्य कृष्णायेति पदं तथा ।।
गोविन्दाय पदद्वन्द्वं गोपीजनवल्लभाय च ।
स्वाहान्तमुच्चरेन्मन्त्रं सर्वसिद्धिप्रदायकम् ।।
श्रीं बीजं बलरामाय नमोन्तं मनुमुत्तमम् ।
जपेद्रहस्यं सर्वार्थराज्यश्रीपुत्रदायकम् ।।

### अवतारगायत्री

तीक्ष्णदंष्ट्रायेति पदं विद्महेति पदं ततः ।
ज्वालाचक्राय धीमहि तन्नो मत्स्यः प्रचोदयात् ।।
दीर्घकण्ठाय विद्महे महीधराय धीमहि ।
तन्नः पदं तदोच्चार्य तद्वः कूर्मः प्रचोदयात् ।।
भूवराहाय विद्महे क्रोडरूपाय धीमहि ।
तन्नः पदं ततः श्रीशः तद्वदेव प्रचोदयात् ।।
ज्ञानप्रदाय विद्महे हयग्रीवाय धीमहि ।
तन्नः पदं ततो ज्ञानं तत्रोद्धृत्य प्रचोदयात् ।
नारसिंहाय विद्महे वज्रनखाय धीमहि ।।
त्रिसंध्याय इदं कुर्यात्तन्नर्सिंसहः प्रचोदयात् ।
परब्रह्मणे विद्महे वामनाय धीमहि ।।
तन्नः पदं ततो ब्रह्मन् तथोद्धृत्य प्रचोदयात् ।
त्रैविक्रमाय विद्महे विश्वरूपाय धीमहि ।।

तन्नः पदं तत्रोद्धृत्य ततो विश्वं प्रचोदयात् ।
दाशरथाय विद्महे रामचन्द्राय धीमहि ॥
तन्नो रामस्तथोद्धृत्य तद्वदेव प्रचोदयात् ।
गोपीजनाय विद्महे जगन्मोहनाय धीमहि ॥
तन्नः कृष्णपदं तद्वत् तद्वदेव प्रचोदयात् ।
श्वेतवर्णाय विद्महे बलरामाय धीमहि ॥
तन्नः पदं ततश्शेषं तद्वदेव प्रचोदयात् ।
तत्पुरुषाय विद्महे विष्णुपत्न्यै च धीमहि ॥
तद्वदेव समुद्धृत्य तन्नो लक्ष्मीः प्रचोदयात् ।
धनुर्धराय विद्महे सर्वसिद्ध्यै च धीमहि ॥
उच्चरेत्तद्वदुद्धृत्य तन्नो धरा प्रचोदयात् ।
श्रीनीलायै च विद्महे विद्यासिद्धै च धीमहि ॥
तन्नः पदं तथोद्धृत्य ततो नीला प्रचोदयात् ।
तन्मन्त्रजपकाले तु तत्तद्गायत्रमुच्चरेत् ॥
तत्तन्मन्त्रार्थसिद्ध्यर्थं दद्यादर्घ्यत्रयं बुधः ।
चक्रराजाय विद्महे ज्वालामालाय धीमहि ॥
तत्रोद्धृत्य पदं सम्यक् तन्नृसिंहः प्रचोदयात् ।
तन्मन्त्रसंध्यां कुर्वीत गायत्रीवत्सदा द्विजः ॥

इति श्रीपाञ्चरात्रे शेषसंहितयां दशमोध्यायः.

---

## एकादशीव्रतम्.

शेषः—

एकादश्यां न भुञ्जीत भक्ष्यादींस्तु न भक्षयेत् ।
फलमूलादिलेह्यादीन् वर्जयेत्सर्वदाऽब्जज ॥

दशम्यैकादशी विद्धा वह्निविद्धा च रोहिणी ।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥
एकादश्यामहोरात्रं पूजयेत् हरिमब्जज ।
ब्राह्मे मुहूर्ते चोत्थाय श्रीधरादीन् प्रणम्य च ॥
नित्यनैमित्तिकं कुर्यात् स्वगृह्योक्तविधानतः ।
तुलसीबिल्वपुष्पाद्यैः पूजयेन्मूलविद्यया ॥
श्रीभूनीलादिभिः सम्यक् चक्रनन्दादिसंयुतैः ।
तत्तन्मन्त्रैः सावतारैः पूजयेन्मन्त्रवित्तमः ॥
सायंसंध्यामुपासीत सप्तयामं प्रपूजयेत् ।
श्राद्धं यथासूतकादौ सूतकान्ते विधीयते ॥
तद्वदेकादशीश्राद्धं द्वादश्यामेव कारयेत् ।
मृतेऽहनि यथा संध्या यथा विष्ण्वादिपूजनम् ॥
तद्वदेकादशीश्राद्धं तत्कुर्यात्तदनन्तरम् ।
ब्राह्मे मुहूर्ते संप्राप्ते स्वगृह्योक्तविधानतः ॥
नित्यनैमित्तिकं कुर्यात् यावज्जीवं द्विजोत्तमः ।
सूर्योदये तथाब्रह्मन् पञ्चरात्रविधानतः ॥
लक्ष्मीनारायणं देवं पूजयेन्मन्त्रवित् शुचिः ।
क्षीराब्धिमध्ये द्वादश्यां बुध्नयर्क्षे मासि चैत्रके ॥
लक्ष्मीरभूत्स्वयं मेषे लग्ने लोकहिताय च ।
तस्मात्सर्वप्रयत्नेन द्वादश्यामुदये शुचिः ॥
सूपैः फलै रपूपैश्च विविधैश्च रसायनैः ।
लक्ष्मीनारायणः पूज्यः षोडशैरुपचारकैः ॥

श्रीभूमिनीळाप्रभृतीन् विनतादीन् सुपूजयेत् ।
विष्णुगायत्रियाचार्घ्यं दध्याद्ध्यायन् त्रयंत्रयम् ॥
लक्ष्मीनारायणदानं कुर्यात्तत्प्रतिमात्मना ।
तत्प्रीत्यै न ममेत्युक्त्वा सालंकारैस्सदक्षिणैः ॥
सूक्तत्रयैर्यजेद्ध्यायन् पायसेन मधुत्रयैः ।
वैश्वदेवादिकं कृत्वा विष्णुशेषैस्सबान्धवैः ॥
वृद्धबालादिभिः पूज्यैः अभ्यागतसुवैष्णवैः ।
स्वयं भुञ्जीत पुत्राद्यैः पूजयेद्वैष्णवान् बुधः ॥
यावज्जीवं प्रकुर्वीत एतदुक्तविधानतः ।
यः करोति द्विजाद्येषु तस्य नास्ति भवादिकम् ॥
तस्य मुक्तिं प्रदास्यामि किं पुनः भोगसंपदः ।
चन्द्रोदये यथाष्टम्यां शृणुष्व कमलासन ॥
जयन्त्यां त्वथ रोहिण्यां यथा कालो विधीयते ।
द्वादश्यां वा त्रयोदश्यां किंचिदभ्युदिते रवौ ॥
सा द्वादश्यत्रविज्ञेया ससाधन इति स्मृतौ ।
तस्मात्सर्वप्रयत्नेन सम्यग्विद्धां परित्यजेत् ॥

## सुदर्शननरसिंहः

मीनमासे शुक्लपक्षे प्रथमामेषलग्नके ।
बध्नयर्क्षे भानुवारे तु द्वापरे ग्रह अष्टके ॥
उच्चस्थे दुष्टनाशार्थं सुदर्शननृकेसरी ।
सृष्टिस्थित्यन्तमोक्षार्थं आविरासीत् हरिः स्वयम् ॥
श्रीनृसिंहजयन्त्युक्तं कुर्यादर्शे द्विजोत्तमः ।
प्रथमायां मेषलग्ने पूजादानादिकं क्रमात् ॥

समाप्योत्तरकार्यं च भुञ्जीयाद्द्विविना तथा ।
शतनिष्कप्रमाणेन प्रतिमां कारयेद्बुधः ॥
तदर्थं दक्षिणां दद्यात् जयन्तीषु चतुर्मुख ।
तदर्थं वाऽथ पादं वा कुर्यात् शक्त्यनुरूपतः ॥
सर्वेषां च प्रपन्नानां इतरेषां यथाविधि ।
क्षत्रविट्शूद्रजातीनां मुमुक्षूणां यथाविधि ॥
जयन्त्युक्तविधानेन सर्वं सिद्ध्यति सर्वदा ।

### सुदर्शननृसिंहजयन्ती

सुदर्शननृसिंहस्य जयन्तीं कारयेत् बुधः ॥
सत्सन्तानप्रसिद्ध्यर्थं बन्धमोचनसिद्धये ।
तज्जयन्त्युत्सवादेव संतानं लभते सदा ॥
तद्वत्सरेण सर्वेषां सत्यमेव न संशयः ।
तत्तन्मासे तज्जयन्तीं कुर्यात्सम्यग्विधानतः ॥
तस्मै मुक्तिं प्रदास्यामि पाञ्चरात्रेण सर्वदा ।
धर्मकामार्थमोक्षाद्यं राज्यं श्रीः वंशवर्धनम् ॥
तस्मात्सर्वप्रयत्नेन पाञ्चरात्रं प्रकल्पयेत् ।
पाञ्चरात्रेण मार्गेण सर्वं सिद्ध्यति सर्वदा ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां एकादशोध्यायः.

---

## सात्त्विकाचारः

वसिष्ठः—

शेषशेष महादेव नित्यनैमित्तिकात्मकम् ।
वेदोक्तं सात्त्विकाचारं तन्मे ब्रूहि सुनिश्चितम् ॥

शेषः—

ब्राह्मे मुहूर्ते चोत्थाय भगवन्नामकीर्तनम् ।
आचार्यकीर्तनं कुर्यात् गच्छेद्वाऽथ नदीं द्विजः ॥
स्नात्वा विधिवदाचम्य शौचाचमनपूर्वकम् ।
कौपीनं कटिसूत्रं च वस्त्रयुग्मं तु धारयेत् ॥
सच्छिद्राण्यूर्ध्वपुण्ड्राणि पवित्रं च द्विजोत्तमः ।
प्राणानायम्य संकल्प्य श्रीविष्णोराज्ञयेति च ॥
अन्तश्शुद्धिं बहिश्शुद्धिं मनोवाक्कायपूर्वकम् ।
सूर्यस्याग्नेश्च त्रिः कुर्यादब्लिङ्गाद्यैर्यथाविधि ॥
सन्ध्ययोरुभयोस्त्रिस्त्रिः मध्याह्ने एकमेव च ।
सूर्योदये प्राङ्मुखस्स्यात् अस्ते पश्चिमतो मुखः ॥
एकं शस्त्रास्त्रनाशाय एकं वाहननाशने ।
असुराणां वधायैकं दद्यादर्घ्यत्रयं शुचिः ॥
सम्यग्ब्रह्मास्त्रवद्ध्यात्वा गायत्रीमुच्चरन् द्विजः ।
उभौ पादौ जले न्यस्य पूरयेदुदकाञ्जलिम् ॥
गोश्शृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ।
एतदर्घ्यत्रयाद्विप्रः सर्वपापैः प्रमुच्यते ।
सूर्यनारायणस्सद्यः सुप्रीतस्तस्य तद्भवेत् ।
अष्टैश्वर्यादिकं सर्वं ददाति परमं पदम् ॥
दिनमेकं तु यो विप्रः सन्ध्याहीनो भविष्यति ।
स याति नरकं घोरं रौरवं रोमसङ्ख्यया ॥
तस्मात्सर्वप्रयत्नेन सन्ध्यां कुर्यात् द्विजोत्तमः ।
अर्घ्यान्ते नृहरिं ध्यात्वा साकारं सर्वतोमुखम् ॥

न्यासादिबन्धनं कुर्यात् असावादित्यो ब्रह्मेति च ।
प्रदक्षिणमथाचामं केशवाद्यादितर्पणम् ॥
प्राङ्मुखोवोदङ्मुखो वा गायत्रीं मूलविद्यया ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
अष्टाविंशतिमेवाऽथ जपेन्न्यासादिना द्विजः ।
सम्यक्प्रदोषकालादीन्विचार्य विधिवज्जपेत् ।
मन्त्ररत्नं जपेद्भक्त्या यावज्जीवं द्विजोत्तमः ॥
सर्वदा सर्वकालेषु मोक्षार्थी स्वाश्रमोचितम् ।
जपोपसस्थानकं कृत्वा ब्रह्मयज्ञमनुत्तमम् ॥
उपादनं ततः स्नानं कुर्यान्माध्याह्निकं क्रमात् ।
होमार्चनविधानं तु वैश्वदेवमतः परम् ॥
बलिं दद्याद्यथायुक्तं वृद्धबालादिभिः सह ।
पञ्चसंस्कारसंयुक्तैः भोजयेद्विधिना द्विजः ॥
मितं भुक्त्वा शतं जप्त्वा स्थित्वा पद्मासने शुचिः ।
ततश्शतपथं गत्वा ताम्बूलं तदनन्तरम् ॥
स्वाध्यायं वा पुराणं वा हरिसङ्कीर्तनादिकम् ।
मुमुक्षुर्नित्ययुक्तश्च मन्त्ररत्नं सदा जपेत् ॥
नित्यनैमित्तिकाद्विप्रो मुमुक्षुर्हरिपूजनात् ।
जपाच्च सात्त्विकाहारात् पूतो भवति सर्वदा ॥
सायङ्कालादिसन्ध्यां च कुर्याद्धोमार्चनादिकम् ।
भोजनं चन्दनं चैव ताम्बूलं तदनन्तरम् ॥
स्वगृह्योक्तविचारं च रक्षा शयनमेव च ।
एवंविधिर्द्विजातीनां वसिष्ठ सुतपोधन ॥

एतदर्धं क्षत्रियाणां वैश्यानां तु तदर्धकम् ।
पञ्चरात्रेण तन्त्रेण समन्त्रेणेव कारयेत् ॥
वासुदेवस्य मुक्तानां नित्यानां सर्वदा विधिः ।
मुमुक्षूणां सुभक्तानां पञ्चरात्रं भवेत्सदा ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां द्वादशोऽध्यायः

---

## स्त्रीशूद्राचारः

व्यासः—

पुरा भगवता प्रोक्तो द्विजानां विधिरुत्तमः ।
स्त्रीशूद्राणां तथा शेष तन्मे ब्रूहि यथातथम् ॥

शेषः—

स्त्रीशूद्राणां विधिं वक्ष्ये सम्यक्प्रणववर्जितम् ।
ब्राह्मे मुहूर्ते चोत्थाय भगवन्नामकीर्तनम् ॥
आचार्यकीर्तनं कुर्यात् गच्छेद्वाथ नदीं च ते ।
ब्राह्मणस्य विधानेन भक्तानां भगवत्यपि ॥
प्रणवं वर्जयेत्सम्यक् विधिस्स्यात्सर्वकर्मसु ।
तद्ब्राह्मणविधानेन कृत्वा शौचादिकं ततः ॥
केशवायेति मन्त्राद्यैः जलं पीत्वा त्रिधा त्रिधा ।
तथान्यनामभिः मूर्ध्नि प्रोक्षयेद्भक्तिपूर्वकम् ॥
संमृत्तिकैरामलकैः केशवाद्यादिनामकैः ।
मूलमन्त्रेण विरजां स्मृत्वा स्नानं विधीयते ॥
कौपीनकटिसूत्राणि शुद्धवस्त्राणि धारयेत् ।
सच्छिद्रमूर्ध्वपुण्ड्राणि पवित्राणि च धारयेत् ॥

स्वर्णयज्ञोपवीतं च पवित्रं स्वर्णरूपकम् ।
तुलसीपद्ममालादीन् धारयेद्यज्ञसूत्रवत् ॥
आचम्य पूर्ववत्सम्यक् केशवाद्यादिनामकैः ।
प्रोक्षयेन्मूर्ध्नि हृदयं मूलमन्त्रेण चाब्जज ॥
मन्त्ररत्नेन सम्मन्त्र्य प्राशयेद्भक्तिपूर्वकम् ।
मन्त्ररत्नेन मूलाद्यैः तर्पयेत्स्वगुरुं स्मरन् ॥
पूजागृहे वा संप्रोक्ष्य तथा प्रणववर्जितम् ।
षट्कर्माणि तथा त्यक्त्वा जपेन्मन्त्राणि सर्वदा ॥
मूलमन्त्रं मन्त्ररत्नं रामं कृष्णं सुदर्शनम् ।
नृसिंहं भूवराहं च ऋष्यादिन्यासपूर्वकम् ॥
चित्रासने व्याघ्रकृत्तौ स्थित्वा शक्त्यनुसारतः ।
स्वगुरुं तद्गुरुं देवं ध्यात्वा कुर्यात् जपं शतम् ॥
स्वगृहे विष्णुमभ्यर्च्य पूर्वोक्तैरेव मन्त्रकैः ।
अर्घ्यं पाद्यं तथा स्नानं अलङ्कारं सुभोजनम् ॥
शयनानन्तं समभ्यर्च्य गुरून् स्मृत्वा तथाब्जज ।
गुरुवद्भगवद्भक्तशुश्रूषा च विधीयते ॥
एतन्नियमयुक्तानां स्त्रीशूद्राणां तथाब्जज ।
तेभ्यो मुक्तिं प्रदास्यामि किं पुनः भोगसंपदः ॥
एष एव विधिस्तेषां मुक्तिरन्यत्र नान्यथा ।
स्त्रीशूद्राणां प्रयत्नेन पञ्चरात्रेण कल्पयेत् ॥
धर्मकामार्थमोक्षार्थं ज्ञानधर्मार्थसिद्धये ।
पञ्चरात्रेण तन्त्रेण वेदमन्त्रादिकं विना ॥
तद्भक्तप्रणवं त्यक्त्वा श्रीबीजाद्यैः प्रकल्पयेत् ।

इति श्रीपाञ्चरात्रे शेषसंहितायां त्रयोदशाध्यायः.

---

**सात्त्विकमन्त्रः**

**नारदः**---

शेषशेष महादेव श्रुतं सर्वमशेषतः ।
पौरश्चरणविद्यादीन् तन्मे ब्रूहि ससात्त्विकान् ॥

**शेषः**---

सुदर्शननृसिंहादि मन्त्रतन्त्रादिकं शुभम् ।
वक्ष्यामि मोक्षतन्त्रोक्तं शृणु नारद सात्त्विकम् ॥
मूलमन्त्रं द्वयं चाथ चक्रराजं नृसिंहकम् ।
रामं कृष्णं वराहं वा सर्वदा मनसा जपेत् ॥
स एव ब्रह्मवेत्ता च स प्रपन्नो जितेंद्रियः ।
स एव लोकान् जयति सर्वान् कामानवाप्नुयात् ॥
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ।
मन्मन्त्रनिरतस्यैव इन्द्राद्याः कमलासन ॥
त्वया सहादिरुद्राद्याः किंकराः खलु सर्वदा ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं सृष्टिस्थित्यन्तहेतवे ॥
मन्मन्त्रशास्त्रकीर्त्यादिजपध्यानपरो भव ।
तस्मै मुक्तिं प्रदास्यामि इह जन्मनि चाब्जज ॥
मन्मन्त्रदेवता ब्रह्मन् मत्समः सततं त्विह ।

**न्यासक्रमः**

ऋषिं मूर्धनि सन्न्यस्य वक्त्रे छन्दस्तथैव च ॥
तत्तन्मन्त्रोक्तविधिना देवतां हृदये स्मरेत् ।
न्यसेद्गुह्ये तथा बीजं शक्तिं तत् पादयोः द्वयोः ॥
पार्श्वसंधौ कीलकं च कवचं व्यापकेन तु ।
क्रमात्स्वदेहे विन्यस्य अस्त्रं प्राकारवत्स्मरेत् ॥

हृत्पुण्डरीकमूर्तेस्तु वर्णं तत्तत्स्मरन् जपेत् ।
इत्येवं तु ऋषिन्यासं प्रथमं कारयेद्बुधः ॥
तन्मन्त्रेण करन्यासं षडङ्गादीन्यथाविधि ।
तत्तन्मन्त्रविधानेन जपेत्तानात्मशुद्धये ॥
कर्मषट्कं योगषट्कं स्मरन्सम्यक् न्यसेज्जपेत् ।
हृदये ज्ञानमुद्रां च ऐश्वर्याभ्यां च मूर्धनि ॥
शक्तिमुद्रां शिखायान्तु बाह्वोर्मुद्रां बलात्मिकाम् ।
नेत्रेषु तैजसीं मुद्रां वीर्यमुद्रां च दिक्षु च ॥
हृत्पुण्डरीकमूर्तौ च पूर्णाषाड्गुण्यहेतवे ।
मुद्रादिध्यानयोगेन षट्कर्मादीन् स्मरेत् द्विजः ॥
तत्तन्मन्त्राक्षरपदैः षडङ्गं कुरु चाब्जज ।
षडङ्गध्यानमात्रेण सर्वसिद्धिं लभेद्बुधः ॥
पूजारम्भे भयस्थाने कान्तारेषु वनेषु च ।
प्राणान्तिकेषु दुर्गेषु षडङ्गन्यासमाचरेत् ॥
स्वदेहे भ्रामयन् त्रिस्त्रिः भ्रामयेच्चक्रमुद्रया ।
अग्निप्राकारमुद्रेति ताभिरात्माभिरक्षणम् ॥
कीलके कवचेऽप्यस्त्रे वर्णे ब्रह्मन्सुमन्त्रवित् ।
विद्विषोच्चाटमरणे वाय्वग्नी योजयेद्बुधः ॥
वश्याकर्षादिसौम्येषु पृथिव्यप्सु सबीजकम् ।
तत्संस्कारः स्थितौ योज्यः पौरश्चरणके जपेत् ॥
आकारादिक्षकारान्तमालया सम्यगब्जज ।
अक्षयं फलमाप्नोति सर्वदा वा जपेत्तथा ॥

ध्यायन्जपेन्मनून्सर्वबुद्धिमानससिद्धये ।
जपहोमादिसिद्ध्यर्थं पौरश्चरणसिद्धये ॥

### मुद्राविधिः

धर्मकामार्थमोक्षार्थं पञ्चमुद्रां प्रदर्शयेत् ।
चक्रं शङ्खं गदां पद्मं योनिमुद्रां क्रमेण तु ॥
जपादौ मध्यमे चान्ते चक्रादीन् सम्यगब्जज ।
सर्वेषामेव शस्त्राणां कारणं चक्रमुच्यते ॥
तस्मात्सर्वप्रयत्नेन चक्रमुद्रां प्रदर्शयेत् ।
अन्योन्यदर्शनात्सद्यो मन्त्रात्संभाषणात्क्वचित् ॥
विप्राणां विफलं चाभूत् जपे न्यासादिदर्शनात् ।

### मन्त्रोपदेशः

गुरोरभावे संप्राप्ते मन्मन्त्रान् सन्निधौ मम ।
मां ध्यायन्नभ्यसेत्सम्यक् नित्यं ज्ञानात्मसिद्धये ॥
सम्प्रदायविहीने च वेदादीनभ्यसेच्छुचिः ।
मत्सन्निधौ च मां ध्यायन् धर्मज्ञानात्मशुद्धये ॥
अर्थकामातुरं क्रूरं नित्यकर्मविहीनकम् ।
कुलीनं स्वगुरुं सद्यो मोक्षार्थी रुद्रवत्त्यजेत् ॥
गुशब्दस्त्वन्धकाराख्यो रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥
मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥
भिन्ननावाश्रितस्तब्धो यथा पारं न गच्छति ।
ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात् ॥

यदाऽऽचार्यः विहीनस्स्यात् तत्पुत्रं शुचिनं तथा ।
तच्छिष्यं वा विचार्याथ प्रपत्त्यादीन् यथाविधि ॥

वेदादीन्मन्त्रतन्त्रादीन् नित्यनैमित्तिकं द्विजः ।
मद्रूपवद्गुरुं ध्यात्वा गृह्णीयात्कमलासन ॥

तस्मै मुक्तिं प्रदास्यामि किंपुनर्भोगसम्पदः ।
ब्रह्मविद्योपदेशस्य शुश्रूषैव न चान्यथा ॥

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थो नैव लभ्यते ॥

पौरश्चरणसिद्ध्यर्थं सिद्धमन्त्रगतश्शुचिः ।
यन्त्रतन्त्रादिकं लोकमन्त्रतन्त्रान् प्रयोजयेत् ॥

यावज्जीवं तु सौवर्णे रौप्ये विंशतिवार्षिकम् ।
भूर्जे द्वादश वर्षाणि तदर्धं ताम्रपत्रके ॥

क्षुद्रलोहादिदार्वादौ अन्येषां वत्सरत्रयम् ।
तिर्यग्यवोदराण्यष्ट ऊर्ध्वं वा व्रीहयस्त्रयः ॥

मध्यमं मध्यमाङ्गुष्ठं पर्व ह्यङ्गुलमिष्यते ।
मात्राङ्गुलप्रमाणेन अष्टषट्चतुरङ्गुलम् ॥

धारणे निर्मलं सौम्यं कारयेद्यन्त्रमुत्तमम् ।
पूर्वोक्तेनैव मार्गेण तत्त्वमष्टादशं तु वा ॥

द्वादशं वा स्वाङ्गुलेन पूजायन्त्रन्तु कारयेत् ।
अन्तर्मुखं सुषुप्त्याख्यं पर्णैर्जाग्रत् बहिर्मुखम् ॥

सर्वतो मुखतो यन्त्रस्वरूपं परिकीर्तितम् ।
विद्वेषोच्चाटनं स्वाप्नं वश्याकर्षन्तु जाग्रता ॥

स्तम्भने मारणे चैव सर्वं यन्त्रं समुद्धरेत् ।
स्वाग्नौ होमं प्रकुर्वीत शान्तिकं पौष्टिकं तथा ॥
पौरश्चरणहोमं च ध्यानाद्यैर्मन्त्रवित्तमः ।
वश्याकर्षादिमोहे च वैदिकादौ यजेद्द्विजः ॥
विद्वेषस्तम्भनोच्चाटे मारणे कुण्डमण्डले ।
कुण्डस्थण्डिलमार्गेण इध्माधानादिपूर्वकम् ॥
वैश्वदेवादिहोमान्ते जुहुयात्कमलासन ।
लौकिकाग्नौ यजेन्मन्त्री तत्तन्मन्त्रेण सद्गुरुः ॥
होमेषु वह्नौ स्वाहान्तं पूजायां तु नमोन्तकम् ।
तर्पणेषु द्वितीयान्तं नमोन्तं तर्पयामि च ॥
भोजनेषु मम प्रीत्यै तुभ्यं सम्प्रददे चवै ।
नमोन्तं नममेत्युक्त्वा योजयेन्मन्त्रविद्गुरुः ॥
दशांशं पूजयेद्भक्त्या तद्दशांशं तु तर्पयेत् ।
तद्दशांशं हुनेत्पश्चात् तद्दशांशं तु भोजनम् ॥
कृत्वा मन्मन्त्रसिद्ध्यर्थं पश्चान्मन्त्रं प्रयोजयेत् ।
यद्यत्चतुर्थमन्त्राश्च तद्बीजाः पिण्डसंज्ञकाः ॥
संज्ञास्तत्पदमन्त्राश्च मन्त्रास्सर्वे चतुर्विधाः ।
प्रणवः विष्णुमन्त्राश्च विप्राणां विधिरन्यथा ॥
इतरेषां तथा ब्रह्मन् षट्कर्म प्रणवं विना ।
षट्कर्मसु प्रतिष्ठासु पौरश्चरणसिद्धये ॥
विप्राणां फलसिद्ध्यर्थं बीजमन्त्रः विधीयते ।
तद्बिम्बे स्यात्तथा यन्त्रे तत्तद्बीजानि योजयेत् ॥

पिण्डसंज्ञानि मन्त्राणि होमादौ योजयेद्गुरुः ।
एकाक्षरं च षड्लक्षं तत्तन्मन्त्रविदब्जज ॥
तद्बीजं सम्पुटीकृत्य सर्वकर्म प्रयोजयेत् ।
यन्त्रतन्त्रादिहोमं च न्यासादीन् बन्धनादिकम् ॥
अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ।
गुरुं प्रकाशयेत् धीमान् मन्त्रं यत्नेन गोपयेत् ॥
गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत् ।

जपक्रमः

नीचहस्तं तु पैशाचं बद्धहस्तं तु राक्षसम् ।
आसुरं मध्यहस्तं तु ऊर्ध्वहस्तन्तु दैवतत् ॥
स्तम्भने मारणे नीचमुच्चाटे राक्षसं भवेत् ।
हस्तासुरं वश्यमोहे ऊर्ध्वहस्तन्तु मोक्षके ॥
उत्तमं मानसं जाप्यं मध्यमं वाचिकं तथा ।
औष्ठ्यं निरोष्ठ्यमधमं ध्वनिस्स्यादधमाधमम् ॥
मानसं मोक्षधर्मे स्यात् आकर्षे वाचिकं भवेत् ।
औष्ठ्यादि ज्ञानमोहे च स्तम्भने मारणे ध्वनिः ॥
जात्यन्ध इति विज्ञेयस्तान्त्रिकाचारतत्परः ।
शुष्कमन्त्ररतस्तद्वत् पङ्गुश्शूद्रवदब्जज ॥
तावुभौ मोक्षरहितौ सर्वकर्मबहिष्कृतौ ।
मन्त्रतन्त्रसदाचाररता वैदिकतान्त्रिकाः ॥
सर्वकर्मसु ते पूज्यास्ते यान्ति परमं पदम् ।

उपदेशकालः

सुमुहूर्ते सुनक्षत्रे मन्त्रमध्यापयेद्गुरुः ।
यन्त्राभिषेचनाद्यैश्च स्वशिष्ये च चतुर्मुख ॥

मेषमासे धनावाप्तिः वृषभे विजयी भवेत् ।
मिथुने पुत्रलाभस्स्यात् कर्कटे बन्धुनाशनम् ॥
सिंहे राज्यादिवृद्धिस्स्यात् कन्यायां सर्वनाशनम् ।
तुलायां सर्वलाभस्स्यात् वृश्चिके दारनाशनम् ॥
धनुर्मासे राज्यलाभः मकरे कोशवर्धनम् ।
कुम्भे रोगी भवेच्छिष्यो मीने सर्वार्थसाधनम् ॥
चन्द्रताराबले ज्ञात्वा मन्त्रादीन् दापयेद्गुरुः ।
व्याधिबन्धनपीडादौ सङ्ग्रामे शत्रुसङ्गमे ॥
मासनक्षत्रलग्नादीन् मोक्षार्थी न विचारयेत् ।
तस्मात्सर्वप्रयत्नेन मूलादीनुपदेशयेत् ॥
विप्राणां क्षत्रियादीनां मोक्षधर्मार्थसिद्धये ।
अभिषेकादियन्त्राद्यैर्मन्त्रवित्कमलासन ॥
नमस्स्वाहान्तमन्त्राणां होमतर्पणभोजने ।
नमस्वाहादि न ब्रूयात् षट्कर्मादौ प्रयोजयेत् ॥
तत्तत्कर्मादिभेदेन तत्तद्भेदं चतुर्मुख ।
ज्ञात्वा सर्वान् मन्त्रतन्त्रान् तत्तत्कर्मणि योजयेत् ॥
असच्छास्त्रं च साहित्यं संहिताभासनादिकम् ।
वणिग्भेषजकर्माणि त्यजेन्मन्त्रविदब्जज ॥

इति शेषसंहितायां चतुर्दशोऽध्यायः.

---

## सदाचारः

शेषः—

सुदर्शननृसिंहादिमन्त्राणां सिद्धये तथा ।
पौरश्चरणसिद्ध्यादीन् वक्ष्यामि विधिना यथा ॥

ब्राह्मे मुहूर्ते संप्राप्ते मौनेन विधिना सदा ।
कैङ्कर्यादीन् करिष्यामि श्रीमद्भगवदाज्ञया ॥

तत्कैङ्कर्यं गुरोर्नित्यं सङ्कल्प्य च सदा शुचिः ।
प्रक्षाळ्य पाणिपादादीन् आचम्य प्रणमेद्गुरून् ॥

आचार्यकीर्तनं कृत्वा भगवन्नामकीर्तनम् ।
हृत्पुण्डरीकतन्मध्ये यन्त्रे मन्त्रं स्मरेद्बुधः ॥

चन्द्रमण्डलमध्यस्थं हयग्रीवविभुं तथा ।
श्वेतं स्मरन् तथा मौनी गच्छेद्वाथ नदीं द्विजः ॥

उदक् दिवा सन्ध्ययोश्च निशि याम्यमुखः द्विजः ।
दुर्भूमौ निर्जने देशे तृणपर्णोपरि द्विजः ॥

धृत्वा कर्णे यज्ञसूत्रं त्यक्त्वा मूत्रपुरीषकम् ।
सन्मृदं पूर्वमादाय नदीतीरे निधाय च ॥

तन्मृदं तु त्रिधा कृत्वा शौचमेकेन कारयेत् ।
अष्टादशं गुदे सम्यक् लिङ्गे षण्मृत्तिकां तथा ॥

ततो वामे षोडश स्यात् उभयोः करयोस्तथा ।
प्रत्येकं पादयोर्दद्यान्मृत्तिकाष्षोडश स्मृताः ॥

करे षण्मृत्तिकां दद्यात् क्षाळयेच्छुद्धवारिणा ।
गण्डूषणत्रयं कृत्वा आचम्य विधिपूर्वकम् ॥

तृणपर्णैस्सदा कुर्यात् दन्तधावनमादितः ।
जिह्वाशोधनकं कृत्वा त्रिंशद्गण्डूषणं पुनः ॥

मुखप्रक्षाळनं कृत्वा आचम्य च समन्त्रकम् ।
अन्यं भागं मृदो देहे लेपयित्वा सुशोधयेत् ॥

स्नात्वाऽऽचम्याथ सङ्कल्प्य श्रीविष्णोराज्ञयेति च ।
अन्यं भागं वामहस्ते त्रिधा कृत्वा समन्त्रकम् ॥

मूलमन्त्रेण तत्कुर्यात् नरसिंहं स्मरेद्द्विजः ।
दशदिग्बन्धनं कुर्यादेकेन च ततः परम् ॥

प्रक्षाल्य पीठमन्येन कुर्यादन्येन मन्त्रवित् ।
पौरुषेण तु सूक्तेन मूध्न्यादौ लेपयेत्स्मरन् ॥

भगवत्पादपद्मोत्थतीर्थस्नानं यथाक्रमम् ।
अघमर्षणसूक्ताद्यैः पुंसूक्तेन च सर्वदा ॥

पञ्चगव्यैस्तिलैस्स्नानं पुंसूक्तेन तु कारयेत् ।
समृत्तिकैरामलकैः देहज्ञानात्मशुद्धये ॥

यथोक्तं तर्पयित्वाऽथ प्रोक्षितं तीरमाविशेत् ।
कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेत् ॥

सच्छिद्रमूर्ध्वपुण्ड्राणि पवित्राणि द्विजोत्तमः ।
पद्माक्षतुलसीमालां पवित्रं च सदर्भकम् ॥

विशुभ्रया मृत्तिकया सान्तरालं मनोहरम् ।
धारयेदूर्ध्वपुण्ड्राणि मोक्षधर्मार्थसिद्धये ॥

ऊर्ध्वपुण्ड्रस्य तन्मध्ये हरिद्राचूर्णमुत्तमम् ।
लक्ष्मीनिवाससिद्ध्यर्थं ललाटे धारयेद्धरेः ॥

स्नानं वा तप्ततोयेन दोषवैषम्यसंभवे ।
नाभेरधस्ताद्वा भेदात् क्षाळयेदात्मनस्तनुम् ॥

तत्राप्यशक्तश्चेत्कुर्यात् स्नानं मानसमेव हि ।
यथाचम्य हृतं वासः परिधाय सुखासने ॥

प्राणानायम्य मां ध्यायेत् हृदयाम्भोरुहे स्थितम् ।
स्नानं मानसमेतत् स्यात् स्नात्वा च हरिमर्चयेत् ॥
आदौ मानससिद्ध्यर्थं आग्नेयं स्नानमाचरेत् ।
वाय्वग्न्यमृतबीजैश्च शोषणादिक्रमेण च ॥
तदाग्नेयं भवेत् स्नानं शोधनं परमं स्मृतम् ।
पूर्वोक्ततन्त्रमार्गेण गायत्र्याद्यैश्च मन्त्रकैः ॥
पञ्चरात्रेण मन्त्रेण प्रणवेन मदुक्तकैः ।
शुद्धसात्त्विकमन्त्राद्यैः विष्णुमन्त्रैस्समस्तकैः ॥
नित्यनैमित्तिकं कुर्यात् स्वगृह्योक्तविधानतः ।
पर्वताग्रे नदीतीरे गवां गोष्ठेऽथवा वने ॥
विष्णवालये गृहे रम्ये ज्ञात्वा मन्त्रं शुचिर्जपेत् ।
शुचौ देशे समं कृत्वा गोमयेनानुलिप्य च ॥
नात्युच्छ्रिते नातिनीचे चेलाजिनकुशोत्तरे ॥
तार्तीयोज्ज्वलकर्णिकं स्वरयुगैराविर्भवत्केसरं
वर्गोल्लासिवसुच्छिदं वसुमतीगेहेन सम्प्रेषितम् ।
ताराधीश्वरवारिवर्णविलसद्दिक्कोणताराङ्कितं
यन्त्रं वर्णमनोहरं निगदितं सर्वामयघ्नं परम् ॥
सौवर्णे राजते ताम्रे यन्त्रमेतत्प्रकल्पयेत् ।
सर्वरोगविनाशार्थं जपहोमार्थसिद्धये ॥
एतद्यन्त्रोपरि स्थित्वा जपेन्मन्त्रविदब्जज ।
उदङ्मुखः प्राङ्मुखो वा आसीनस्सुसमाहितः ॥
अक्षतैस्सिकतैर्वापि तिलं वा पुष्पमेव वा ।
यथोपपन्नमुत्सृज्य यतवाक्कायमानसः ॥

अपक्रामन्तु भूतानि पिशाचोरगराक्षसाः ।
सर्वे ते भूमिपालाश्च सर्वेषामविरोधकम् ॥
गच्छतां दोषजुष्टानां ब्रह्मकर्मसमारभेत् ।
नदीजलेन संप्रोक्ष्य वाग्यतो नियतेन्द्रियः ॥
अस्य श्चासनमन्त्रस्य पृथिव्याःपदमुच्चरेत् ।
मेरुपृष्ठऋषीत्युक्त्वा श्रीकूर्मो देवता वदेत् ॥
सुतलं छन्द इत्युक्त्वा ओं बीजं शक्तिर्ह्रीं वदेत् ।
क्लीं कीलकं श्रीं कवचं ऐंअस्त्रं रक्तवर्णकम् ॥
अखिलजगदाधाराय उच्चरेत्कूर्मरूपिणे ।
अनन्तपद्मनाभाय हुंफट्स्वाहन्ततःपरम् ॥
आसने विनियोगं च ध्यानमन्त्रविदब्जज ।
विंविमलासनायेति अंअनन्तासनाय च ॥
पंपद्मासनायपदं कूंकूर्मादि ततःपरम् ।
कमलपर्यन्तमियुक्त्वा तद्वत्सर्वासनेभ्यः ॥
गुंगुरुभ्यस्तथा तद्वत् नमान्तं चास्मदुच्चरेत् ।
नमो गुरुभ्यस्ततश्च अस्मतपरमगुरुभ्योपिच ॥
ऐंपदं तत्ततो नीं च नीलायै पदमुच्चरेत् ।
ततो ह्रीं भूमथेत्युक्त्वा भूम्यैपदमनन्तरम् ॥
श्रीमित्युक्त्वा श्रियै तद्वदों तन्नारायणेति च ।
अंपदं चात्मने तद्वत् नमोन्तं प्रणवादिकम् ॥
उच्चरन्बुद्धिमान् तद्वत् कूर्माय इदमासनम् ।
तत्तद्भुवौ स्मरन् ब्रह्मन् नमेन्मन्त्रार्थसिद्धये ॥

येऽन्तरिक्षगता भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्त्यच्युताज्ञया ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

उत्तिष्ठन्तु भूतपिशाचा ये ते स्युः भूमिभारकाः ।
एतेषामविरोधेन ब्रह्मकर्म समारभे ॥

ततोन्तरितं तद्वद्रक्षोन्तरिता अरातयः ।
विष्णोः स्थानमसीत्युक्त्वा चक्रमुद्रां प्रदर्श्यच ॥

पृथिव्यै नम इति ख्यातं गुरुवन्दनपूर्वकम् ।
प्रार्थयेन्नारसिंहं तं ज्ञानमन्त्रार्थसिद्धये ॥

अतितीक्ष्णमहाकाय कल्पान्तदहनोपम ।
नृसिंहाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ॥

ईशान्यदेशे संस्थाप्याः दुर्वासा नारदस्तथा ।
व्यासं पराशरं शक्तिं दक्षिणे संस्मरेत् शुकम् ॥

मन्त्रमन्त्रेश्वरं नत्वा ऋषिकल्पान् तथैवच ।
प्राणायामं ततः कुर्यान्मन्त्रवित्कमलासन ॥

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥

नुषुम्नानाडिमार्गेण पद्मतन्तुसुसूक्ष्मया ।
उपर्यारोहयेद्विष्णुः कुम्भकेन नभस्वता ॥

भित्वा च ब्रह्मणो रन्ध्रं बहिर्देहाद्विनिर्गतम् ।
प्रविश्य भास्करस्यापि मण्डलान्निर्गतं बहिः ॥

अशरीरं तथा जीवं परस्मिन् ब्रह्मणि ध्रुवे ।
स्थितं ध्यायेत् स्थितं तत्र स्वदेहं योनिजं दहेत् ॥

तत्पञ्चोपनिषन्मन्त्रान् स्वदेहे सम्यगब्जज ।
तत्संहारक्रमेणैव न्यस्य मूलेन मन्त्रवित् ॥

नाभिचक्रस्य मध्यस्थवायुना चण्डवायुना ।
वायुबीजेन मूलेन शोषयेन्मन्त्रवित्तमः ॥

तद्दहेदग्निमूलेन हृच्चक्रास्थितवह्निना ।
क्षीराब्धिमध्यसंभूताऽमृतेन च समन्त्रकम् ॥

कुर्यात्तत्प्लावनं सम्यक् अमृतेनैव साधकः ।
सृष्ट्यन्ते क्षालनं कुर्याद्वारुणेन समन्त्रकम् ॥

पर्यायेण प्रकुर्वीत जपपूजादिसिद्धये ।
द्वात्रिंशन्मात्रया कुक्षौ पुरं यदिडयानिलम् ॥

कुम्भयेद्वायुबीजेन चतुष्षष्ट्या तु मात्रया ।
शनैश्शनैः पिङ्गलया अग्निबीजेन पूर्ववत् ॥

इडया पूरयेत्पश्चात् पूर्वोक्तेनैव संख्यया ।
तथाचामृतबीजेन पूरणादि यथाक्रमम् ॥

शोषणं दाहनं चैव प्लावनं क्षालनं तथा ।
नृत्तबीजं च खे ध्यायेत् पूर्णचन्द्रामृतोपमम् ॥

तदुत्थपीयूषनिधौ जाते पाण्डरपङ्कजे ।
स्मरेज्जीवं समुत्पन्नं सकाशाद्ब्रह्मणस्तथा ॥

जीवात्प्रधानं तस्मात्तु बुद्ध्यादिगुणसंयुतम् ।
आत्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः ॥

अग्नेरापः अद्भ्यः पृथिवी पञ्चविंश आत्मा भवति ॥
इति सृष्टिक्रमेणैव तत्तन्मात्रादिभिः क्रमात् ॥
पञ्चभूतमयं सर्वं जीवात्मपरमात्मकम् ।
इत्थं शरीरमात्मीयं सृज्यं मह्यादिभूतजम् ॥
प्रविश्य पङ्कजं बद्ध्वा प्रबुद्धं तद्विनिर्गतैः ।
शातकुम्भमयैः कुम्भैः पूर्णैरमृतवारिभिः ॥
स्नापितं शुद्धमनसा मार्जयित्वा निजं वपुः ।
आराधने हरेर्योग्यं परस्य परमात्मनः ॥
श्रिया तत्सायुधैस्साङ्गैः ज्ञानैश्वर्यादिभिस्सह ।
अकारादिक्षकारान्तं केशवादीन् स्मरन् द्विजः ॥
प्रणवादिनमोन्तं तु प्रत्येकं तच्चतुर्मुख ।
करबाह्यान्तश्शुध्यर्थं मातृकादीन्यसेद्बुधः ॥
करतलौ करपृष्ठौ च सम्यक्प्रक्षाळ्य च द्विजः ।
अनन्तरं बहिर्न्यासं मातृकां तद्वदब्जज ॥
आननवृत्तद्व्यक्षिश्रुतिनासागंडोष्ठदन्तमूर्धास्यं ।
दोस्संध्यग्रहेषु हृदादिपाणिपादयुगे ॥
जठराननयोर्व्यापकसंज्ञां न्यसेदक्षरान्क्रमशः ।
षडङ्गं षट्स्वरैस्सम्यक् पञ्चवर्णान् क्रमेण च ॥
शेषमस्त्रे न्यसेन्न्यासं षडङ्गं मातृकां द्विजः ।
ततोन्तश्शुद्धिसिद्ध्यर्थं तत्तद्दैवस्सुमन्त्रवित् ॥
आधाराद्यादिचक्रेषु अन्तर्न्यासाख्यमातृका ।
आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
ले पत्रे षोडशारे विशदशतदले द्वादशाद्ये चतुष्के ।

वासान्ते बालमध्ये डपकठसहिते कर्णदेशे स्वराणां
भं क्षं तत्त्वार्थयुक्तं सकलमुनिगणा ब्रह्ममार्गं वदन्ति ॥
सङ्कर्षणं त्वथाधारे लिङ्गे प्रद्युम्नरूपिणम् ॥
नाभिचक्रे वैनतेयं हृदि नारायणं विभुम् ।
तालुमूले तथा विष्णुं वासुदेवं ललाटके ॥
मातृका वर्णचक्रेषु मोक्षार्थी सततं स्मरेत् ।
पञ्चोपनिषदां न्यासं कुर्यात्सृष्टिक्रमेण च ॥
सर्वमन्त्रप्रसिद्ध्यर्थं मोक्षज्ञानात्मसिद्धये ।

**पञ्चोपनिषन्न्यासः**

षौं नमश्शिरसि स्थाने परायेति पदन्ततः ॥
परमेष्ठ्यात्मने तद्वन्नमोन्तं विन्यसेत् मनुम् ।
यां नमःपराय पदं वक्त्रे पुरुषात्मने नमः ॥
रां नमःपराय हृदि न्यसेद्विश्वात्मने नमः ।
वां नमःपराय लिङ्गे तन्निवृत्त्यात्मने नमः ॥
लां नमःपराय पदोः न्यसेत्सर्वात्मने नमः ।
जपपूजादिहोमेषु न्यसेदिदमतन्द्रितः ॥
ततः कुर्याद्विशेषज्ञो मोक्षार्थी द्विजसत्तमः ।
ब्रह्महत्त्यादिनाशार्थं रोगपापादिनाशने ॥
सर्ववश्यादिसिद्ध्यर्थं महैश्वर्यादिसिद्धये ।
पुत्रपौत्राभिवृद्ध्यर्थं सर्वमन्त्रार्थसिद्धये ॥
सर्वविद्यादिसिद्ध्यर्थं सर्वोत्पातादिशान्तये ।
सर्वशान्तिप्रसिद्ध्यर्थं मन्त्रलोपादिनाशने ॥

क्रियालोपविनाशार्थं तन्त्रलोपादिनाशने ।
कर्मलोपादिशान्त्यर्थं पूजालोपादिशान्तये ॥
अन्नदोषविनाशार्थं सर्वदोषादिशान्तये ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं स्मरेन्मन्त्रविदब्जज ॥

## पुरुषसूक्तन्यासः

भक्त्या पुरुषसूक्तस्य न्यासं कुर्याज्जपादिषु ।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे च चतुर्थीं दक्षिणे तथा ।
पञ्चमीं वामजानौ तु षष्ठीं दक्षिणस्तथा ॥
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ॥
एकादशीं वामबाहौ द्वादशीं दक्षिणे तथा ।
त्रयोदशीं कर्णदेशे आस्यदेशे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पञ्चाङ्गानि समारभेत् ॥
प्रायश्चित्ते जपे चैव विष्णोराराधने तथा ।
इदमेकं तथा कुर्यात् यन्त्रमन्त्रार्थसिद्धये ॥
करादिमातृकास्थाने न्यसेद्रक्षार्थमुत्तमम् ।
नारायणं नृसिंहं वा रामं कृष्णं सुदर्शनम् ॥
महायन्त्रं स्मरेद्देहे सुदर्शननृसिंहकम् ।
हृत्पुण्डरीकयन्त्रे तु स्वमन्त्रोक्तादिदैवतम् ॥
ध्यायन्जपेत्पूजयंश्च विष्णुसायुज्यहेतवे ।
तुन्दमध्ये पद्ममिष्टं तन्मध्ये नाभिरिष्यते ॥

तत्र चक्रं द्वादशारं आहुर्मासाक्षराणि च ।
विष्ण्वादिमूर्तयस्तेषु द्वादश द्वादशस्वपि ॥
अब्दं चक्रस्थितं चक्रं भ्रामयामि स्वमायया ।
अरेषु भ्रमते जीवः क्रमेण कमलासन ॥
इति ज्ञात्वा जपेत् ध्यायेत् स मुक्तस्सर्वदा भवेत् ।
विष्णोः पदं स्यात्तद्देशं एतद्विद्वदधिष्ठितम् ॥
तस्मात्सर्वात्मना ब्रह्मन् जपध्यानपरो भव ।
तस्मिन् यदन्तस्तदुपासितव्यम् ॥
नारायण परं ब्रह्म ब्रह्मा नारायणः परः ।

## आवरणन्यासः

आनन्दादिमयं ब्रह्म तद्ब्रह्मण इत्युपासीत ।
प्राणायामं ततः कृत्वा न्यासान्ते तद्यथाविधि ॥
सुदर्शननृसिंहस्य शक्तयो रुद्रमातरः ।
आज्ञा धृतिर्मोहिनी च भीमा कामा च चञ्चला ॥
प्रज्ञा कीर्तिश्च विज्ञेयाः तत्तद्गुणविशिष्टकाः ।
सुदर्शननृसिंहस्य शक्तयो रुद्रमातरः ॥
न्यसेत् प्रथमावरणे सर्वबन्धविमुक्तये ।
ओं नमः केशवायेति नमो नारायणाय च ॥
ओं नमो माधवायेति गोविन्दायेति राशिषु ।
ओं नमः श्रीविष्णवे च मधुसूद नमोऽस्तुते ॥
ओं नमस्त्रिविक्रमाय वामनाय नमोऽस्तुते ।
नमस्ते श्रीधरायेति हृषीकेश नमोऽस्तुते ॥

ओं नमः पद्मनाभाय नमो दामोदराय च ।
इति सञ्चिन्त्य सन्मन्त्री द्वितीयावरणे न्यसेत् ॥
ओं नमस्संकर्षणाय वासुदेव नमोऽस्तुते ।
प्रद्युम्नाय नमस्तुभ्यं अनिरुद्ध नमोऽस्तुते ॥
नमः पुरुषोत्तमाय अधोक्षजाय नमोऽस्तुते ।
ओं नमो नारसिंहाय अच्युताय नमोऽस्तुते ॥
नमो जनार्दनायेति उपेन्द्राय नमोऽस्तुते ।
ओं नमो हरये तुभ्यं श्रीकृष्णाय नमोस्तु ते ॥
इति बुद्ध्वा विशेषज्ञः तृतीयावरणे न्यसेत् ।
मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ॥
रामो रामश्च रामश्च कृष्णः कल्कीति च क्रमात् ।
इति विश्वासपूर्वेण चतुर्थावरणे न्यसेत् ॥
भीमश्चोग्रस्तपो नीलश्चण्डश्चैव भयंकरः ।
विश्वेश्वरः कमलश्च नवव्यूहभिदाः स्मृताः ॥
भीमादिनृहरिं ध्यायेत् वश्यादिक्रमभेदतः ।
स्वदेहे भीमनृहरिं सौम्ये सौम्यं विचिन्तयेत् ॥
क्रूरकर्मसु यन्त्रेषु क्रूरध्यानं च योजयेत् ।
यस्य स्मरणमात्रेण वाग्विभूतिर्विजृम्भते ॥
ततः क्षोभयते लोकान् दर्शनादेव साधकः ।
ध्यानभेदेन सिध्यन्ति मोक्षधर्मादिकास्सदा ॥
इति शोध्य द्विजश्रेष्ठः पञ्चमावरणे न्यसेत् ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥

शङ्कुकर्णः सर्पनेत्रः सुमुखस्सुप्रतिष्ठितः ।
इति ज्ञात्वा च पूर्वादि षष्ठे चावरणे न्यसेत् ॥
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ ।
वारुण्यां जयविजयौ सौम्ये धातृविधातरौ ॥
तत्तद्रूपं तथाध्यात्मा सप्तमावरणे न्यसेत् ।
गरुत्मान् गरुडस्ताक्ष्यों वैनतेयः खगेश्वरः ॥
नागान्तको विष्णुरथस्सुपर्णः पन्नगाशनः ।
नाभौ तु गरुडं ध्यायेत् शेषान् त्वष्टक्रमे क्रमात् ॥
हनुमानञ्जनासूनुः वायुपुत्रो महाबलः ।
रामेष्टः फल्गुनसखः पिङ्गाक्षोऽमितविक्रमः ॥
उदधिक्रमणश्चैव सीताशोकविनाशनः ।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥
मेषादिराशौ विन्यस्य रामेष्टं संस्मरेद्द्विजः ।
रूपभेदादिमार्गेण नवमावरणे न्यसेत् ॥
सायुधैर्वेदघोषैश्च ब्रह्माणं दक्षिणे अजम् ।
सायुधैश्शिवमत्युग्रं वामभागे महेश्वरम् ॥
स्वदेहे विष्णुमूर्तिं च वासुदेवं परात्परम् ।
तद्रूपादिविशिष्टेन दशमावरणे न्यसेत् ॥
इन्द्रो वह्निः पितृपतिः नैर्ऋतो वरुणो मरुत् ।
कुबेर ईशः पतयः पूर्वादिक्रमशो न्यसेत् ॥
साङ्गैश्च सायुधैस्सम्यक् न्यसेदेकादशे बुधः ।
अर्जुनः फल्गुनः पार्थः किरीटी श्वेतवाहनः ॥

बीभत्सुः विजयः कृष्णः सव्यसाची धनंजयः ।
दशदिक्षु न्यसेद्विद्वान् सन्नद्धं चार्जुनं स्मरन् ॥
क्रोधादिभावभेदेन द्वादशावरणे न्यसेत् ।
आदित्यमिन्दुं भौमं च बुधं जीवं कविं शनिम् ॥
राहुं केतुं न्यसेद्ध्यायन् प्राकारे तु त्रयोदशे ।
आदित्यं तु स्वदेहे तु चक्ररूपं स्मरन् सदा ॥
मरीचिमङ्गिरं तद्वत् पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं भृगुं नारदं च न्यसेत्क्रमात् ॥
स्वदेह अङ्गिरं ध्यायेत् द्विसप्तावरणे न्यसेत् ।
अगस्त्यं च भृगुं कुत्सं वसिष्ठं गौतमं तथा ॥
काश्यपं चाङ्गिरसं च न्यसेत्पञ्चदशे पुनः ।
ईशान्ये संस्मरेत् सम्यक् अगस्त्यं पूर्वकल्पके ॥
चक्रं शङ्खं गदां चैव पद्मं शार्ङ्गं तथाङ्कुशम् ।
पाशं बाणं च परशुं असिं शूलं हलं तथा ॥
शक्तिं च वज्रखेटं च कुन्तं बिभ्राणमेव च ।
न्यसेद्दिक्षु विदिक्ष्वपि षोडशावरणे स्मरन् ॥
दुर्गां सरस्वतीं मायां पिङ्गलां पार्वतीं तथा ।
विनायकं क्षेत्रपालं शिवं सप्तदशे न्यसेत् ॥
अचक्राय नमश्चैव विचक्राय नमस्तथा ।
ओं नमः पञ्चचक्राय ज्वालाचक्राय ते नमः ॥
ओं नमो महाचक्राय सुचक्राय नमस्तथा ।
नमस्त्रैलोक्यचक्राय असुरान्तचक्राय च ॥

नम आधारचक्राय कालचक्राय ते नमः ।
प्रणवादिनमोन्तं च नमेत्साात्त्विकदेवताः ॥
यजेत्सत्त्वपरीवारान् कल्पयेदितरान् बुधः ।
सभार्याय च साङ्गाय सायुधायेति तद्वदेत् ॥
तथा सपरिवाराय कल्पयेत्पूजनादिकम् ।
न्यसेदष्टादशे ब्रह्मन् दशचक्रादिकं मतम् ॥
कुर्यात् वारुणबीजेन जलप्राकारमुत्तमम् ।
वायुबीजेन तत्कुर्याद्वायुप्राकारमुत्तमम् ॥
अग्निबीजेन तत्कुर्यात् अग्निप्राकारमुत्तमम् ।
तत्क्रमेण प्रकुर्वीत एकविंशतिकं शुचिः ॥
परयन्त्रादि तन्त्रादि मन्त्राद्यौषध शान्तये ।
कल्पयेदात्मरक्षार्थं जयायावरणं तथा ॥

### प्राणप्रतिष्ठा

प्राणप्रतिष्ठां कुर्वीत जपज्ञानात्मशुद्धये ।
प्राणप्रतिष्ठाकाले च प्राणानायम्य पूर्ववत् ॥
न्यासं कृत्वा विधानेन प्रणवस्य द्विजोत्तमः ।
तालत्रयं च दिग्बन्धः अष्टोत्तरशतं जपेत् ॥
प्राणप्रतिष्ठामन्त्रस्य अस्य श्रीपदमादितः ।
ब्रह्मविष्णुमहेश्वरा ऋषयो ऋग्यजुस्साम इत्यपि ॥
आथर्वाणि च छन्दांसि क्रमेणैवोद्धरेद्बुधः ।
सकलजगत्स्रष्टुश्च प्राणशक्तिपदं ततः ॥
विष्णुपत्नी देवता च ओं बीजं शक्तिश्रीं ततः ।
ह्रीं कीलकं ऐं कवचं क्लीमस्त्रं रक्तवर्णकम् ॥

सकलजगत्सृष्टिं च क्रमेणैव च योजयेत् ।
प्राणप्रतिष्ठाकाले च देहे तु विनियोजयेत् ॥
कृत्वा करषडङ्गं तु षट्स्वरैस्सम्यगब्जज ।
कवर्गं सम्यगुद्धृत्य मनो बुद्धिः ततःपरम् ॥
अंकारं चित्तात्मने आं नमआद्यन्तसंयुतम् ।
ज्ञानाय हृदयायेति नमो हृदि तु विन्यसेत् ॥
चवर्गं च तदोद्धृत्य शब्दस्पर्शेति रूपकम् ।
रसगन्धात्मनेत्युक्त्वा ऐश्वर्यायेति चोद्धरेत् ॥
मूर्ध्नि तत् शिरसे स्वाहा इति तत्पूर्ववद्भवेत् ।
टवर्गमुद्धरेद्विद्वान् श्रोत्रं तच्चक्षुरेव च ॥
जिह्वाघ्राणात्मनेत्युक्त्वा ममूं योज्य च पूर्ववत् ।
शक्त्यै शिखायै संयोज्य शिखायां तु वषण्न्यसेत् ॥
तवर्गं पूर्वमुद्धृत्य वाक्पाणीतिपदं ततः ।
पादपायूपस्थात्मने हैंमं संयोज्य मन्त्रवित् ॥
बलाय कवचाय हुं बाह्वोर्न्यस्य ततःपरं ।
पवर्गं च समाहृत्य पृथिव्यप्तेज एव च ॥
वाय्वाकाशात्मने तद्वदोमौं पूर्ववदब्जज ।
तेजसे नेत्रतया च न्यसेद्वौषट्सुनेत्रयोः ॥
यादि क्षान्तं समुद्धृत्य विष्णुनारायणेति च ।
वासुदेवरूपी भगवान् परमात्मात्मने ततः ॥
अंकारं पूर्ववदभ्यस्य वीर्यायास्त्राय फट् ततः ।
दिक्षु दिग्बन्धनं कुर्याद्दशप्रागादिमन्त्रवित् ॥

ककारादिक्षकारान्तं प्रत्येकं बिन्दुसंयुतम् ।
प्रणवाद्यन्तकं कृत्वा षडङ्गन्यासमुत्तमम् ॥
एतद्धि विपरीतेन संहारे न्यासमाचरेत् ।
ध्यानं कुर्यान्महाविष्णोः श्रीसूक्तोक्तविधानतः ॥
तत्क्षणात्प्राणशक्तिस्तु व्याप्ता भवति विष्णुना ।
पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदळायताक्षि ॥
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ।
तारं पाशं ततो मायां अङ्कुशं यरलवेति च ॥
शषसहोन्ततः क्षं लं हं सः सोहं सहों स्थितः ।
अमुष्य प्राणा इह अमुष्य जीव इह स्थितः ॥
अमुष्य सर्वेन्द्रियाणि मनोबुद्धिस्ततःपरम् ।
अहङ्कारचित्तवाक्पाणिपादपायूपस्थं च ॥
शब्दस्पर्शरूपरसगन्धपृथिव्यप्तेजश्च ।
वाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमेवच ॥
प्राणा इहैवागत्यागत्य सुखं चरन्तु तिष्ठन्तु स्वाहा ।

**मन्त्रजपः**

पुनरङ्कुशं च मायां पाशं यरलवेति च ।
शषसहों षं ळं हं सं ओमौमैंह्रींततो रमाम् ॥
मान्मथं नारसिंहं च नमो नारायणाय च ।
मां रक्ष रक्ष स्वाहा हंसस्सोहं चतुर्मुख ॥
भेदं ज्ञात्वा विधानेन जीवात्मपरमात्मनोः ।
शेषशेषिप्रकारेण संस्मरन् मन्त्रमुच्चरन् ॥

त्रिरावर्त्य पुनर्मन्त्रं जपेद्बीजान्तसंयुतम् ।
अष्टाविंशतिसङ्ख्येन स्वमन्त्रं प्रत्यहं जपेत् ॥

मोक्षमन्त्रादिसिद्ध्यर्थं कृत्वेदं जपमाचरेत् ।
धेनुमुद्रां प्रदर्श्याथ चक्रमुद्रां प्रदर्शयेत् ॥

प्राणायामं ततः कृत्वा मूलमन्त्रं यथाविधि ।
मन्त्ररत्नं जपेद्भक्त्या सुदर्शनमथापि वा ॥

### अन्तर्यागः

सुदर्शननृसिंहस्य न्यासं कुर्याद्विचक्षणः ।
मुद्रां धृत्वा ततो ध्यायेन्मानसेनार्चयेद्धरिम् ॥

षोडशैरुपचारैश्च परिवारान् समर्चयेत् ।
आत्मरक्षां जपेदादौ चक्रमन्त्रेण मन्त्रवित् ॥

परमन्त्रग्रासमन्त्रेण चक्रराजेन चिन्तयेत् ।
सुदर्शननृसिंहन्तु तज्जपेन्मन्त्रवित्तमः ॥

उपसंहारमेतत्स्यात् यन्त्रतन्त्रादिसंयुतम् ।
अन्तर्यागमिदं ब्रह्मन् परमैकान्तिनां विधिः ॥

### बाह्ययागः

बाह्यपूजां तद्वदेव पुरुषसूक्तेन सर्वदा ।
तत्तद्बिम्बादिमन्त्राद्यैरर्चयेन्मोक्षसिद्धये ॥

सुवर्णताम्रकै रत्नैर्मृदा पाषाणचित्रकैः ।
सुदर्शननृसिंहस्य बिम्बं कुर्याद्यथाविधि ॥

शिल्पिहस्तेन कुर्वीत अमन्त्रकविधानतः ।
नयनोन्मीलनं कृत्वा पश्चाद्विप्रस्समन्त्रकैः ॥

तद्बिम्बं पञ्चगव्येन प्रायश्चित्तादिपूर्वकम् ।
पञ्चरात्रोक्तमार्गेण स्नपनं कारयेद्बुधः ॥
प्रतिष्ठाद्युत्सवान्तं च कारयेन्मन्त्रवित्तमः ।
पूर्वोक्तनिष्ठकस्सम्यक् शापानुग्रहसाधकः ॥
पट्टणाद्याच्च बिम्बस्य गृहाद्यार्चादिकं तथा ।
धर्मकर्मार्थमोक्षार्थं बाह्यपूजां यथाविधि ॥
प्रतिष्ठाद्युत्सवान्तं च यावज्जीवं समन्त्रकम् ।
मुमुक्षुः पूजयेद्विप्रो गृहस्थो वा विशेषतः ॥
मन्त्रादिशयनान्तं च पूजयेन्मोक्षचिन्तकः ।

**संग्रहयागः**

तद्बाह्याराधनं वक्ष्ये संग्रहेण चतुर्मुख ॥
कूर्मादीन् दिव्यलोकं तदनु मणिमयं मण्टपं तत्र शेषं
तस्मिन् धर्मादिपीठं तदुपरि कमलं चामरग्राहिणीश्च ।
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं
सेनेशं द्वारपालान् कुमुदमुखगणान् विष्णुभक्तान् प्रपद्ये ॥
द्विहस्तमेकवक्त्रं च शुद्धस्फटिकसन्निभम् ।
सहस्ररविवह्नीन्दुलक्षकोटिसमप्रभम् ॥
मरीचिचक्रमध्यस्थं चक्रायुधसुलाञ्छितम् ।
श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ॥
किरीटहारकेयूरवलयादिविभूषितम् ।
पीताम्बरधरं सौम्यरूपमाद्यमनामयम् ॥
स वासुदेवो विज्ञेयः सृज्यं सर्वं च तन्मुखात् ।
ध्येयश्च योगिभिर्नित्यं हृत्पद्मासनविष्टरे ॥

पश्यन्ति सूरयश्शश्वत् तद्विष्णोः परमं पदम् ।
नित्यमुक्तैस्सायुधाद्यैरेवं ध्यात्वा सुवैष्णवः ॥

स्वाचान्तः स्वोर्ध्वपुण्ड्रः प्रणमनमजिनाद्यासनं चासुयामः
साङ्गन्यासो जपस्स्यात् हृदयकमलके मानसी देवपूजा ।
वामस्थं वारिपात्रं कुसुममितरतश्चान्यदग्रेऽर्घ्यपाद्या
चामस्नानीयमर्घ्याद्धरितनुकुसुमस्वात्मनां प्रोक्षणं स्यात् ॥
आह्वानं चासनार्घ्यं पदसलिलमथाचामपुंसूक्तयुक्त-
स्नानं वस्त्रोपवीते मलयजकुसुमे धूपदीपौ क्रमेण ।
मध्वादिः पर्के आदावुपरि च सलिलं पायसाद्यन्नजातं
पानीयाचामपूगं परिगतिनमनोद्वासनं विष्णुपूजा ॥

## स्वमन्त्रजपः

कृत्वैवं बाह्यपूजां तु स्वमन्त्रन्यासमाचरेत् ।
अस्य श्रीपदमुच्चार्य सुदर्शननृसिंह च ॥
मन्त्रस्यास्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
सुदर्शननृसिंहश्च देवता बीजमोन्ततः ॥
स्वाहा शक्तिः कीलकं श्रीं आं कवचं रं जं अस्त्रकम् ।
रक्तवर्णं जपेद्विद्वान् जपध्यानादिकं सदा ॥
सुदर्शननृसिंहस्य प्रीत्यर्थे विनियोगतः ।
तन्मन्त्रेण करन्यासं पदैः कुर्याच्चतुर्मुख ॥
महाचक्रसुचक्राय चतुर्थ्यन्तैः सुमन्त्रवित् ।
ज्ञानादिषड्गुणैस्तद्वदाधाराख्येतिचक्रे के ॥
ततस्त्रैलोक्यचक्राय ज्वालाचक्राय चेति च ।

असुरान्तकचक्राय षडङ्गन्यासमाचरेत् ॥
व्याप्यं तद्वचपकं देहे कुर्यान्मन्त्रेण संस्मरन् ।

ध्यानम्—

बिभ्राणं शक्तिखड्गं ज्वलनमथसृणिं दन्तकुन्तौ कुठारान्
शङ्खं चक्राब्जपाशान् हलमुसलगदाखेटशूलांश्च दोर्भिः ।
प्रत्यालीढं समीडे त्रिनयनमरुणं पिङ्गकेशं सुदंष्ट्रं-
देवं पश्चार्धयोगासनलसितचतुश्चक्रभास्वन्नृसिंहम् ॥

तत्तन्मुद्रां कर्मभेदे जपे ज्ञात्वा विधानतः ।
आत्मरक्षां जपेदादौ चक्रमन्त्रेण मन्त्रवित् ॥
ओंनमो भगवते चैव ओं प्रं सुदर्शनाय च ।
दुष्टं दारयदारय दुरितं हनहनेति च ॥
पापं मथमथ तद्वदारोग्यं कुरुकुरु उभौ ।
हाहा हुंफट् स्वाहा इत्यष्टाविंशतिर्जपेत् ॥
परमन्त्रग्रासमन्त्रेण चक्रराजेन तत्तथा ।
ओंब्रह्मासुदर्शनेति चक्रराजपदं ततः ॥
सर्वदुष्टभयंकर द्वौ च द्वौ छिन्धिछिन्धि च ।
विदारयविदारय परमन्त्रान्ग्राहयन्तथा ॥
भूतानि त्रासय द्वौ च तत्परमन्त्रतन्त्रं च ।
तन्त्रान् दह द्वौ सन्मन्त्री भस्मीकुरु तद्विधान् ॥
सर्वशत्रून् हनहन हुंफट्स्वाहामनुं जपेत् ।
ततो जपेत्स्वमन्त्रं तु उद्धरेत्तारमादितः ॥
सहस्रारपदमुच्चार्य ज्वालावर्तिनेति च ।
नृसिंहैकाक्षरं द्वौच हनद्वौ द्रेमिति क्रमात् ॥

हन द्वौ हुंफडित्युक्त्वा स्वाहामनुमिदं जपेत् ।
सुदर्शननृसिंहस्य मनुरिष्टार्थसाधक ॥
अयुतं जपमात्रेण नात्र कार्या विचारणा ।
चातुरङ्गविधानेन षट्कर्माणि प्रयोजयेत् ॥
जपतर्पणहोमाश्च तथा ब्राह्मणभोजनम् ।
मन्त्राणां फलसिद्ध्यर्थं चातुरङ्गमिति स्मृतम् ॥
अपामार्गेण जुहुयात् सर्वकामार्थसिद्धये ।
अष्टैश्वर्यप्रसिद्ध्यर्थं जुहुयाद्गोघृतैस्तिलैः ॥
कर्मभेदेन तद्ब्रूयात्तत्तत्कर्म यजेद्बुधः ।
यन्त्रमुद्धृत्य विधिवत् जपध्यानविशारदः ॥
ओंतद्ब्रह्मेत्युपासीत सृष्टिस्थित्यन्तहेतवे ।
ज्ञानभक्त्योश्च कर्मार्थे मोक्षार्थे तन्नमोन्तकम् ।
सर्वसिद्धिकरं नृणां सर्वोपद्रवनाशनम् ॥
सर्वसम्पत्प्रदं सौम्यं यन्त्रतन्त्रौ तथाऽब्जज ।
प्रणवानष्ट तन्मन्त्री वल्लवानष्ट बुद्धिमान् ॥
तत्तत्कर्मसु तन्नाम आद्यन्तं योजयेन्मनोः ।
मन्त्रादौ योजयेद्वश्ये द्वौ वश्यं कुरु मन्त्रकम् ॥
सम्पुटं द्विगुणीकृत्य आकर्षय पदद्वयम् ।
आकर्षे सर्वमन्त्राणां विधिरेष चतुर्मुख ॥
विद्वेषयद्वे मन्त्रान्ते विद्वेषे सन्त्रविच्छुचिः ।
स्तम्भने स्तम्भयद्वौ च ग्रथितौ मन्त्रमध्यमे ॥
उच्चाटयद्वावुच्चाटे विदद्ध्यन्तरीयकम् ।
मारणं मारयद्वौ च आदिमध्यान्तरोधकम् ॥

नक्षत्रनामकामादीन् कुर्याद्योज्यक्रमेण च ।
पूर्वाह्ने सौम्यकर्माणि क्रूरकर्माणि मन्त्रवित् ॥
उभयोस्सन्ध्ययोः काले घटिकादशकं जपेत् ।
पौरश्चरणकं कृत्वा पश्चादेव समाचरेत् ॥
दिश्यैन्द्र्यां मन्डले च स्यात्पार्थिवे स्तम्भने जपेत् ।
आग्नेय्यां दिशि विद्वेषे तद्वदाग्नेयमण्डले ॥
याम्ये जपेत्तथाऽऽकर्षे नैरृत्यां मोहने तथा ।
वश्ये च पौष्टिके चैव भवेच्च कमलासन ॥
वारुण्यां शान्तिके मन्त्री कुर्यादम्भसि मण्डले ।
वायव्यां मण्डले तच्च उच्चाटं संस्मरन् जपेत् ॥
सौम्ये तद्ध्यानयोगेन वश्ये तद्वायुमण्डले ।
ऐशान्यां मारणे क्षोभे अङ्ग तद्वायुमण्डले ॥
योनिमुद्रा वश्यकर्मण्याकर्षे तद्वदङ्कुशम् ।
पल्लवं तु तथा द्वेषे स्तम्भने चक्रमुद्रिकाम् ॥
दृष्टिमुद्रा मारणे स्यादुच्चाटे संहृतिः बुधः ।
मन्त्रस्य मोदकं कृत्वा कृत्वा द्रावकमब्जज ॥
मुद्रादर्शनमात्रेण तत्तत्फलमवाप्नुयात् ।
समित्प्रादेशकं सौम्ये अन्यत्राङ्गुलसप्तकम् ॥
सुषिरं चर्मसहितं भिन्नं तद्भिन्नपत्रकम् ।
कृष्णरक्ताक्षतान् पुष्पान् क्रूरे चाप्यनुभूतिकम् ॥
वश्याकर्षे रक्तवर्णं मोक्षे श्वेताक्षतादिकम् ।
पूजातर्पणसर्वं च यन्त्रोपारि विचक्षणः ॥

अञ्जलिः तर्पणे सौम्ये सव्ये क्रूरे भवेत्सदा ।
अपामार्गं खादिरं च निम्बत्रिकटुरूक्षकान् ॥
तैलं कार्पासलवणं क्रूरकर्मणि हावयेत् ।
आकर्षे स्तम्भने वश्ये तिलशर्करया युतम् ॥
त्रिमध्वक्तं प्रकुर्वीत मारणे तद्विशेषकम् ।
तन्नक्षत्रसमित्प्रोक्तं निम्बतैलं च पूर्वकम् ॥
कारस्कारं करं वीरं जुहुयात् कर्मसिद्धये ।
माषपायसकूश्माण्डसंयुतं ध्यानभेदतः ॥
परमन्त्रग्रासमन्त्रेण फलं दद्यात् त्रिकालकम् ।
रिपुं तच्चतुरङ्गेन तद्रावणहिरण्यवत् ॥
मारयेत्तद्भूतमोहान् रक्षितं शम्भुनापि वा ।
एतत्कर्म विजानीयात् कुर्यात्कर्म विचक्षणः ॥
देवब्राह्मणरक्षार्थं अदृष्टार्थं करोति यः ।
एतत्कर्मविधानेन निर्भयस्स्यात् शुचिर्गुरुः ॥

## मन्त्रिमहिमा

स वेदान्ती चरेत् ज्ञानी स प्रपन्नो जितेन्द्रियः ।
स एव परमैकान्ती स वै मोक्षार्थचिन्तकः ॥
स एव ब्रह्मवेत्ता च मत्पुत्रस्स सखाऽब्जज ।
सर्वकर्मसु पूज्यश्च समन्त्रज्ञस्स तान्त्रिकः ॥
वेदान्तशास्त्रान्मन्त्रज्ञः मच्छास्त्राद्वा द्विजश्शुचिः ।
संपाद्य धनधान्यादीन् भार्यादीन् पोषयेच्च यः ॥
संसारं भरते ब्रह्मन् स्वकुक्षिं भरते च यः ।
स्ववंशस्य क्षयं कृत्वा स याति नरकं ध्रुवम् ॥

स याति नरकं घोरं रौरवं रोमसंख्यया ।
स्वभारं मयि विन्यस्य मदर्थे सर्वमब्जज ॥
देवब्राह्मणधर्मार्थं एतदाचरणेन च ।
धनधान्यादि शास्त्रादि दत्वा जीवति यो नरः ॥
अष्टैश्वर्यादिकं दत्वा तस्य मोक्षं ददाम्यहम् ।
तस्मात्सर्वप्रयत्नेन निर्भरो भव सर्वदा ॥
नित्यनैमित्तिकं कुर्यात् मत्कैङ्कर्यं यथाविधि ।
प्रकृतिः पुरुषश्चेति मम रूपे दुरत्यये ।
अनुप्रविश्य द्वितयं क्षोभयाम्यहमिच्छया ।
नास्ति पातकलेशश्च ब्रह्महत्यादिकं सदा ॥
मज्जपध्यानयुक्तानां मद्भक्तानां तथाब्जज ।
बीजादिशक्तीरथ नादभेदान् ध्यानासनं मण्डलहोमकर्म ।
दिक्कालमुद्रासनपल्लवादीन् भेदं परिज्ञाप्य जपेत्सुमन्त्री ॥
वषड्वश्ये वौषडाकृष्ट्ये हुं द्वेषे खे च मारणे ।
योजयेत्कर्मभेदेन नमोन्तं कर्मणि स्थितः ।
षडुच्चाटेति मां ध्यायन् नामकर्मादिसंयुतम् ॥
स्वहाऽकृष्टौ स्वधापुष्टौ इत्येते मन्त्रपल्लवाः ।
बीजान् साध्यं पल्लवांश्च आद्यन्ते मन्त्रवित्तमः ॥
क्रूरे क्रूरं तथा योज्य सौम्ये सौम्यान् प्रयोजयेत् ।
एष एव विधिस्सर्वः द्विजातीनां चतुर्मुख ॥
मन्मन्त्राणां सदाचारो गतिरन्यत्र नान्यथा ॥
राजयोगमिदं ब्रह्म मोक्षयोगमिदं शुभम् ।
ज्ञानयोगमिदं भक्तिः प्रपत्तिः योगमुत्तम् ॥

## प्रपत्तिः

प्रपत्तिः द्विविधा ब्रह्मन् आर्तो दृप्तश्चतुर्मुख ।
काम्यार्थी आर्त एव स्यात् मदाज्ञाछेदकारकः
कर्मज्ञानादिरहितः स वै कैवल्यभोगगः ।
स्वधर्मनियताचाररतो दृप्तस्स वै शुचिः ॥
मन्मन्त्रध्याननिरतो मदाज्ञापालकस्सदा ।
स वै ज्ञानी प्रपन्नस्स्यात् मत्सायुज्यादिभोगगः ॥
मद्द्रोही आर्त एव स्यात् मत्प्रियो दृप्त एव च ।
दृप्तस्यैव हि दास्यामि यत्सायुज्यादिकं तथा ॥
इदं रहस्यं परमं गुह्याद्गुह्यतरं भवेत् ।

## बाह्ययोगः

बाह्ययोगे तथा वक्ष्ये बाह्यशुद्ध्यर्थमुत्तमम् ॥
पञ्चभूतमयं देहे भूतेष्वेतेषु पञ्चसु ।
मनसा धारयेत्तत्र ध्यानस्य चयमादितः ॥
धारणा सा च संसारसागरोत्तारकारणम् ।
आज्ञानुपादपर्यन्तं पृथिवीस्थानमिष्यते ।
वितला चतुरश्रा च वसुधा वज्रलाञ्छिता ॥
स्मर्तव्या पञ्चघटिका तत्रारोप्य प्रभञ्जनन् ।
तस्योपर्यूरुमूलं तु वारिस्थाने चतुर्मुख ॥
अर्धचन्द्रसमाकारं श्वेतमञ्जूषलाञ्छितम् ।
स्मर्तव्यमम्भः श्वसनमारोप्य दशनाडिका ॥
आनाभिदेशमध्यान्तं अग्निस्थानमुदाहृतम् ।
तत्त्वसिन्धूरवर्णानि ज्वलनं दश पञ्च च ॥

स्मर्तव्यो नाडिका प्राणं तत्त्वकुम्भे तथेतरम् ।
नाभेरुपरि नासान्तं वायुस्थानं चतुर्मुख ।
वेदिकाकारवद्धीमान् बलवान् भूतमारुतः ।
स्मर्तव्यो भूतकेनैव प्राणमारोप्य मारुतम् ॥

घटिका विंशतिस्तस्मात् घ्राणाद्ब्रह्मबिलावधि ।
व्योमस्थानं नभस्तत्र भिन्नाञ्जनसमप्रभम् ॥

जये मारुतमारोप्य कुम्भकेनैव यत्नवान् ।
बिम्बं राशौ च देवः स्याच्चतुर्बाहुरलङ्कृतः ॥

पृथिव्यंशे यजेद्देवं शङ्खचक्रगदाधरम् ।
अनिरुद्धं हरिं चाग्रे यजेत्तु भवमुक्तये ॥

आप्यंशे पूजयेद्योऽग्रे नारायणमुदग्रधीः ।
प्रद्युम्नमग्नौ वाय्वंशे सङ्कर्षणमतः परम् ॥

व्योमांशे परमात्मानं वासुदेवं समर्चयेत् ।
अचिरादेव तत्प्राप्तिः युञ्जानस्य न संशयः ।
तस्य त्रिपूरुषं ब्रह्मन् कुलं कर्मोत्तरं शतम ॥
विष्णोः पदं वा सालोक्यं यद्वान्यदपि वाञ्छितम् ।
सिद्ध्यन्ति तस्य कर्माणि सत्यमत्र न संशयः ।
अन्तर्योगं बहिर्योगं यः करोति द्विजोत्तमः ॥

स एव वैष्णवस्सम्यक् एतदाचारनिष्ठकः ।
वैष्णवो द्विविधः प्रोक्तो बाह्यश्चाभ्यन्तरस्तथा ॥

शङ्खचक्रादिकं बाह्यमान्तरं वीतरागता ।
तदुक्तं पूर्वमेव स्याद्द्विजातीनां यथाविधि ॥

## सदाचारशेषः

तच्छेषं विधिना किञ्चित् शृणु नारद तत्त्वतः ।
कौपीनं कटिसूत्रञ्च वस्त्रयुग्मं शिखां तथा ॥
सच्छिद्रमूर्ध्वपुण्ड्राणि यज्ञसूत्रं कमण्डलुम् ।
पद्माक्षतुलसीमालां तापसंस्कारमुत्तमम् ।
विष्णुनाम हरेर्दास्यं मन्त्रयागं यथाविधि ॥
कर्मज्ञाने तथा श्रद्धां भक्तिं वैराग्यमुत्तमम् ।
पुत्रेषणादिरहितं कामादिरहितं तथा ॥
असच्छास्त्रविहीनं तं वेदान्तश्रवणं तथा ।
न्यायार्जितं शान्तिसत्यनित्यनैमित्तिकं तथा ॥
पञ्चयज्ञसमाधिं च यजनाद्यादिकं तथा ।
सदाचार्याश्रयं तद्वदत्यधिप्रीणनं तथा ॥
मौनादियमसंयुक्तं जिह्वादीन्द्रियनिग्रहम् ।
बिम्बसंस्थापनत्वं च विष्णोः कैङ्कर्यमुत्तमम् ॥
सदा मन्त्राश्रयत्वं च प्रपत्तिं सम्यगब्जज ।
विप्राणां वैदिकानां च प्रपन्नानामयं विधिः ।
एतद्गुणसमायुक्तो वैदिकस्समुदाहृतः ।
पूर्वोक्तगुणयुक्तो यः स प्रपन्नस्स वैदिकः ॥
स एव परमैकान्ती मुमुक्षुस्स गुरुश्शुचिः ।
प्रादेशमात्रविस्तारमायामन्तच्चतुर्गुणम् ॥
कौपीनं कारयित्वाऽथ विप्राद्या धारयेत्सदा ।
कटिसूत्रं प्रकुर्वीत राज्जवं पञ्चसूत्रकम् ॥

तत्सूत्रेण च कौपीनं गृहस्थाद्यश्च धारयेत् ।
सुश्वेतं दोषरहितं अन्तर्वासमखण्डितम् ॥
पार्श्वे पुच्छद्वयं कुर्यात् अग्रे पुच्छद्वयं तथा ॥
पृष्ठभागे पुच्छमेकं कृत्वा पूजाविगर्हितम् ॥
अन्तर्वासस्य विप्राणां पञ्चपुच्छं भवेत्सदा ।
अन्तर्वासमिदं विप्र कौपीनोपरि धारयेत् ॥
बहिर्वासं वामभुजे धारयेद्यज्ञसूत्रवत् ।

### यज्ञसूत्रम्

यज्ञसूत्रं प्रकुर्वीत सुकार्पासेन मन्त्रवित् ॥
गायत्र्या दीर्घतन्तुं च कृत्वा नारायणं स्मरन् ।
तत्तन्तुं त्रिगुणीकृत्य कृत्वा मूलेन सूत्रकम् ॥
तत्सूत्रं त्रिगुणीकृत्वा गायत्र्या संस्मरन् हरिम् ।
एकीकृत्य च मन्त्रेण तत्त्रिरावृत्तिरूपकम् ॥
नाभ्यादिब्रह्मरन्ध्रान्तं प्रमाणेनैव कारयेत् ।
तन्मन्त्रध्यानयोगेन बध्नीयादग्रकद्वयम् ॥
एकीकृत्य च विप्रेन्द्रो गृहस्थस्य द्वयं क्रमात् ।
यज्ञोपवीतं परमं पवित्रं बलमस्तु तेजः ॥
इति मन्त्रेणैव गृही धारयेद्यज्ञसूत्रकम् ।
कर्मयज्ञादिसिद्ध्यर्थं देहज्ञानात्मशुद्धये ॥
यज्ञसूत्रं द्विजश्रेष्ठः सततं धारयेच्छुचिः ।
तथोपनयनार्थं च यज्ञसूत्रविधिर्भवेत् ॥
कौपीनं कटिसूत्रं च एकं तद्यज्ञसूत्रकम् ।
मौञ्जीं कृष्णाजिनं दण्डं ब्रह्मचारी तु धारयेत् ॥

ब्रह्मचर्योक्तनित्यादीन् विवाहावधि कारयेत् ।
कुर्यात्पूर्वोक्तविधिना गार्हस्थे तु सुबुद्धिमान् ॥

वने स्नात्वा तदाचारं वानप्रस्थो गृहस्थवत् ।
पश्चात्सन्यासविधिना यज्ञसूत्रं शिखां तथा ॥

कौपीनं कटिसूत्रं च त्रिदण्डं नित्यकर्म च ।
काषायमजिनं पात्रमासनं च कमण्डलुम् ॥

सदा कुर्यात् द्विजश्रेष्ठः सन्यासे सम्यगब्जज ।
पूर्वोक्तविधिना कुर्यात् जपं वेदान्तपारगः ॥

ध्यानं पूजादिकं भैक्षं गृहस्थोक्तादिकं विना ।
काषायं वृत्तवद्योगी धारयेत्पुच्छयुक्तकम् ॥

इति सन्यासयोगान्तः विप्राणां विधिरब्जज ।

## वर्णधर्मः

कौपीनं कटिसूत्रञ्च वस्त्रयुग्मद्वयं तथा ॥

अन्तर्वासं क्षत्रवैश्यैरग्रपुच्छद्वयं विना ।
धारयेयुर्यज्ञसूत्रं क्षत्रिया वैश्यजातयः ॥

स्वधर्मोक्तविधानेन आचरेत्पूजनादिकम् ।
अग्रे पुच्छद्वयं बध्वा द्विरावृत्यैककच्छकम् ॥

तद्वस्त्रेणैव चोत्तर्यं स्त्रीणाञ्च विधिनाऽब्जज ।
उत्तर्यकच्छहीना ये नरास्स्युः कर्मगर्हिताः ॥

कौपीनं कटिसूत्रञ्च वस्त्रयुग्मं कमण्डलुम् ।
गुरुवद्भक्तशुश्रूषा मदाज्ञा मण्डनं तथा ॥

कुर्यात्स्वधर्ममाचारं शूद्राणां विधिरब्जज ।
पुच्छद्वयं वृत्तरूपं शूद्राणां धारणं भवेत् ॥
पद्माक्षमालावद्धार्यं बहिर्वासस्सदा शुचिः ।
तदर्धं संकराणान्तु तद्भाक्तानान्तु शूद्रवत् ॥
तत्तद्वर्णाश्रमाणाञ्च तत्तत्पूर्वोदितं तथा ।
धर्मकामार्थमोक्षार्थं कल्पयेत्तच्चतुर्मुख ॥
एवमुक्तप्रकारेण सर्वेषां सर्वदा सदा ।
लभते पौरुषीं सिद्धिं तद्विष्णोः परमं पदम् ॥

इति शेषसंहितायां पञ्चदशोऽध्यायः.

---

## पुरुषसूक्तविधिः

नारदः—

शेषशेष महादेव श्रोतुमिच्छामि तत्त्वतः ।
सूक्ताना मुत्तमं सूक्तं वद मे भक्तवत्सल ॥

शेषः—

सूक्तानामुत्तमं सूक्तं मोक्षश्रीज्ञानवर्धनम् ।
वक्ष्ये पुरुषसूक्तं हि तद्विधानं सुदुर्लभम् ॥
पुरुषसूक्तं जपेत्सद्यो महापातकराशयः ।
नश्यन्ति तत्क्षणात्तस्य द्विजस्य विधिनाब्जज ॥
ब्रह्मत्वं वा शिवत्वं वा इन्द्रत्वं वा भवेत्सदा ।
पुरुषसूक्तं जपेद्विष्णोः सिध्यन्ति सकलाश्शुभाः ॥
ब्रह्महत्त्यादियुक्तानां महापातकिनां तथा ।
महारोगप्रयुक्तानां उपपातकिनां तथा ॥

शत्रुक्षयं जिगीषूणामायुष्यारोग्यकाङ्क्षिणाम् ।
राज्यश्रीकांक्षिणां तद्वदष्टैश्वर्यविचारिणाम् ॥
अष्टैश्वर्यप्रयुक्तानां ब्रह्मादिफलकांक्षिणाम् ।
सृष्टिस्थित्यन्तमिच्छूनां नित्यनैमित्तिकात्मनाम् ॥
मुमुक्षूणां प्रपन्नानां परमैकान्तिनां सदा ।
पुरुषसूक्तं जपेत्तद्वत्तेन पूजादिहोमकान् ॥
पौरुषेण च सूक्तेन सव सिद्ध्यत्यसंशयः ।
ब्रह्मयज्ञः न चेत्तस्य सर्ववेदफलं भवेत् ॥
त्रिसंध्यं यो जपेत्तस्य मोक्षधर्मादिकं लभेत् ।
पुरुषसूक्तं जपन् रुद्रः शिवोभवति निश्चयः ॥
पुरुषसूक्तजपध्यानात् तत्पादोदकधारणात् ।
नीलकण्ठः कपाली च शिवो भवति निश्चयः ॥
ऋषयो देवताश्चैव ब्रह्मा रुद्रादयस्सदा ।
पुरुषसूक्तजपात्सद्यः ते वै शुद्धा भवन्ति हि ॥
नित्यं पुरुषसूक्तं तु जपन् मोहान् गुणागुणैः ।
स सर्वलोकान् जयति स याति परमं पदम् ॥
अयुतं जपमात्रेण तस्य सिद्धिर्भविष्यति ।
ब्रह्महत्त्यादिकं सर्वं शतावृत्त्यैव नश्यति ॥
महारोगादिकं सम्यक् सहस्रेण प्रशाम्यति ।
पुरुषसूक्तं हरिं ध्यायन् जप्त्वाऽयुतमतन्द्रितः ॥
चातुरङ्गविधानेन सर्वं सिध्याति सर्वदा ।
दशांशं पूजयेत्पद्मैः दशांशं तर्पयेद्बुधः ॥

दशांशं भोजयेद्भक्ष्यैः दशांशं जुहुयाच्छुचिः ।
गोघृतैः पायसैः पूर्वैः अपामार्गैर्मधुत्रयैः ॥
ऋग्भिः समस्तकैः कुर्यात् होमं पुरुषसूक्तकैः ।
तत्क्षणादेव सिद्धिस्स्यात् नात्रकार्या विचारणा ॥
पुरुषसूक्तस्य मन्त्रस्य ब्रह्मा ऋषिरुदाहृतः ।
छन्दश्च देवी गायत्री देवता विष्णुरुच्यते ॥
नीं बीजं शक्तिश्रीं तद्वत् कीलकं ह्रीं चतुर्मुख ।
ऐं कवचं रमस्त्रं श्वेतवर्णमुदाहृतम् ॥
प्रणवेन करन्यासं षट्स्वरैर्मन्त्रवित्तमः ।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ।
पञ्चमीं वामजानौ तु षष्ठीं दक्षिणतस्तथा ॥
सप्तमं वामपादे तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ॥
एकादशीं वामबाहौ द्वादशीं दक्षिणे तथा ।
त्रयोदशीं कण्ठदेशे आस्यदेशे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पञ्चाङ्गानि समारभेत् ॥
प्रायश्चित्ते जपे चैव विष्णोराराधने तथा ।
सहस्रशीर्षेतिऋचा ज्ञानाद्यैर्हृदि विन्यसेत् ॥
यज्ञेन यज्ञऋचा शिरसि न्यासमाचरेत् ।
एतावानस्यऋच्या तु कुर्याद्दिग्भन्धनं क्रमात् ॥

कृत्वैवं हि षडङ्गन्तु प्रणवेन महामते ।
न्यसेद्व्याप्यं व्यापकञ्च ध्यानं कृत्वा जपेद्बुधः ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥
ध्यात्वा जपेत्पुरुषसूक्तं मोक्षधर्मार्थसिद्धये ।
मध्ये तारं सबिन्दु स्यात् तत्कोष्ठं तद्बहिर्लिखेत् ॥
कोणेषु विलिखेद्विष्णुं षडक्षरमतन्द्रितः ।
बहिश्श्रिया च संवेष्ट्य बहिरष्टदलं लिखेत् ॥
दलेषु विलिखेन्मूलं मायया वेष्टयेद्बुधः ।
तद्बहिर्द्वादशदलं वासुदेवमनुं लिखेत् ॥
दलेषु मायया ऽऽवेष्ट्य तद्बहिष्षोडशं दलम् ।
ऋचां दलेषु संलिख्य नीलाबीचेन वेष्टयेत् ॥
द्वात्रिंशद्दलमालिख्य दलेषु विलिखेत्सुधीः ।
पुण्डरीकाक्षस्य मनुं वेष्टयेत्प्रणवेन तु ॥
हंसेतिपदसंयुक्तं स्वरान्तर्व्यञ्जनान्बहिः ।
संलिखेत्परितस्तद्वद्वेष्टयेज्जायया सह ॥
पाशाङ्कुशेन संवेष्ट्य अष्टदिक्षु लिखेत्क्रमात् ।
इन्द्रबीजादिकं लिख्य प्रतिष्ठां कारयेद्बुधः ॥
यन्त्रराजमिदं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
धारयेत्पूजयेद्भक्त्या सर्वबन्धविमुक्तये ॥
गुरुणाकारयेद्भक्त्या क्षत्रविट्छूद्रजातिकम् ।
सर्वान्कामानवाप्नोति तत्क्षणान्नात्र संशयः ॥

इदं रहस्यं परमं सर्वेषाञ्च चतुर्मुख ।
सम्यक्पुरुषसूक्तस्य अङ्गसूक्तानि तज्जपेत् ॥
कार्यार्थी विधिवद्ब्रह्मन् श्रीपुंसूक्तानि तत्त्वतः ।
रुद्रसूक्तं जपेद्ध्यायन् क्रूरकर्मसु तत्त्ववित् ॥
धर्मः मोक्षः पुरुषसूक्ते सौम्ये श्रीभूमिसूक्तके ।
जपेत्क्रूरतमे रुद्रसूक्तान्येव तथाब्जज ॥
श्रीभूसूक्तं चान्नसूक्तं रुद्रसूक्तं तथा भवेत् ।
पुरुषसूक्तस्यांगमात्रात्तत्कर्मफलदप्रदम् ॥
घृतान्नशुद्धिसिद्ध्यर्थं तत्सूक्तान्येव तद्विधौ ।
नित्यनैमित्तिके मोक्षे पुंसूक्तं तु जपेत्सदा ॥
श्रीभूसूक्तान्नसूक्तं च जपेत्तद्वद्द्विजोत्तमः ।
जपेत्क्रूरतमे रुद्रसूक्तान्येव न संकरः ॥
जपेत्तु पौरुषं सूक्तं श्रीभूसूक्तादि वैष्णवः ।
न्यासमूलनृसिंहाद्याः कृष्णरामवराहकाः ॥
सुदर्शनहयग्रीवमत्स्यश्रीभूमिगारुडाः ।
वासुदेवादि नीला च गायत्री केशवादिका ॥
एते सर्वे महामन्त्राः सात्त्विका भुक्तिमुक्तिदाः ।
महामन्त्रस्याङ्गहीने लभेत्सर्वफलं सदा ॥
न लभेदङ्गहीनं चेदङ्गस्य फलमुत्तमम् ।
अङ्गी विष्णुर्भवेत्सर्वे अङ्गा रुद्रायस्तथा ॥
इति मत्वा जपेन्मन्त्री मोक्षधर्मार्थसिद्धये ।

इति शेषसंहितायां षोडशोध्यायः.

---

## श्रीसूक्तविधिः

शेषः —

श्रीसूक्तस्य विधिं वक्ष्ये दृष्टादृष्टार्थसिद्धये ।
विष्णुसायुज्यसिद्ध्यर्थं अष्टैश्वर्यादिसिद्धये ॥
सर्वेषां हितकामानां सिद्धिज्ञानात्मसिद्धये ।
श्रीसूक्तस्य ऋषिः ब्रह्मा तद्ध्यानेन तथाब्जज ॥

छन्दश्च देवी गायत्री विष्णुरेव च देवता ।
श्रीं बीजं तु क्लीं शक्तिः कीलकं ऐं चतुर्मुख ॥
ह्रीं कवचं क्षौमित्यस्त्रं रक्तवर्णं हिरण्मयम् ।
श्रीमन्नारायणेत्युक्त्वा प्रीत्यर्थे विनियोजयेत् ॥

श्रीबीजेन करन्यासं कुर्यात्तत्प्रणवेन तु ।
हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥

ज्ञानादिकं न्यसेद्विद्वान् हृदादिध्यानयोगतः ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥

इति कृत्वा शिरसि तां मध्ये ह्यावाह्य चान्ततः ।
शिखायां तु न्यसेन्मन्त्री श्रियै जातेति मन्त्रतः ॥

बाह्वोर्न्यस्य च नेत्राभ्यां गन्धद्वारेति मन्त्रतः ।
महादेव्यै च तद्दिक्षु कुर्याद्दिग्बन्धनं क्रमात् ॥

व्याप्यं तद्व्यापकं चैव श्रीबीजेन न्यसेद्बुधः ।
पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ॥

विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ।
इति ध्यानं प्रकुर्वीत श्रीसूक्तमयुतं जपेत् ॥

चतुरङ्गं प्रकुर्वीत अष्टैश्वर्यादिसिद्धये ।
अयुतं बिल्वपत्रेण गुग्गुलेन मधुत्रयैः ॥

श्रीसूक्तयजनात्सम्यक् चक्रवर्तित्वमाप्नुयात् ।
तत्पुष्पैरेवमिन्द्रत्वं शिवत्वं तत्फलैस्सदा ॥

ब्रह्मत्वं तु च तत्काष्ठैः तत्पत्रैर्वाञ्छितं भवेत् ।
कमलैः पूजयेत्तद्वत्तर्पयेत् चन्दनाम्भसा ॥

एवमेव प्रकुर्वीत धर्मकामार्थमुक्तये ।
मध्ये श्रीबीजमालिख्य बिन्दुसाध्यसमन्वितम् ॥

तद्बहिः परितो लेखः श्रीसूक्तेनैव मन्त्रवित् ।
चतुर्विंशद्दलान्येव दलेषु विलिखेद्बुधः ॥

विष्णुगायत्रिया मन्त्री मायया वेष्टयेद्बुधः ।
द्वात्रिंशद्दलमालिख्य तद्बहिस्तद्दलेषु च ॥

पुण्डरीकाक्षमन्त्रेण मान्त्रिको विलिखेत्क्रमात् ।
स्वराण्येतद्व्यञ्जनानि हंसहंसेतिसंयुतम् ॥

साध्यं तु परितो लेख्यं नीलाबीजेन वेष्टयेत् ।
पाशाङ्कुशेन संवेष्ट्य इन्द्राद्यष्टदले लिखेत् ॥

गुह्याद्गुह्यतमं ब्रह्मन् कुर्यात्तत्सर्वसिद्धये ।
एतस्य सदृशो नास्ति सर्वसूक्तेषु सर्वदा ॥

इति श्रीपाञ्चरात्रे शेषसंहितायां सप्तदशोऽध्यायः.

---

## भूसूक्तविधिः

शेषः—

विष्णुसूक्तस्य मन्त्रस्य माहात्म्यं पूर्ववत्तथा ।
श्रीसूक्तस्य च भेदोऽस्ति होमध्यानफलादिकम् ॥
ह्रीश्च मे लक्ष्मीश्च पत्न्यौ नीला वक्षस्थले तथा ।
मन्त्रभेदात्कर्मभेदः फलभेदः तथाब्जज ॥
अस्य भूसूक्तमन्त्रस्य पितामह ऋषिस्तथा ।
छन्दश्च देवी गायत्री विष्णुपत्नीह देवता ॥
ह्रीं बीजं च तु एं शक्तिः ओं कीलकमथाब्जज ।
श्रीं कवचं क्षौमित्यस्त्रं वर्णश्श्यामोऽथ रक्तकः ॥
भूबीजेन षडङ्गं तु कुर्याद्ध्यायन्करद्वये ।
भूमिर्भूम्नेति वाक्येन हृदयं पूर्ववन्न्यसेत् ॥
आदित्याश्चेति वाक्येन न्यसेच्छिरसि संस्मरन् ।
शृङ्गेशृङ्गेति वाक्येन शिखायान्तु न्यसेद्बुधः ॥
वायुमतीति वाक्येन न्यसेद्बाह्वोः क्रमेण च ।
मेदिनी देवीति वाक्येन नेत्राभ्यां न्यासमाचरेत् ॥
धनुर्धराय मन्त्रेण कुर्याद्दिग्बन्धनं क्रमात् ।
व्याप्यं तद्व्यापकं सम्यक् तद्बीजेन न्यसेद्बुधः ॥
विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम् ।
लक्ष्मीप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥
इति ध्यात्वा बुधश्रेष्ठो भूसूक्तजपमाचरेत् ।
अयुतं जपमात्रेण सर्वलोकाधिपो भवेत् ॥
अर्धेनैव हुनेत्तेन वक्तुं शक्यं न मादृशैः ।

विष्णुरेव विजानाति श्रीभूनीलादि तत्फलम् ॥
चातुरङ्गविधानेन कुर्याद्ब्रह्मविदब्जज ।
पूजयेत्ततुलस्या तु होमयेत्कमलैस्तिलैः ॥
मधुत्रयैः गुग्गुलैश्च अपामार्गैश्च लाजकैः ।
सर्वराज्याधिपत्यर्थं कुर्यान्मोक्षार्थमुत्तमम् ॥
उद्धरेत्सर्वसिद्धयर्थं भूसूक्तं यन्त्रमुत्तमम् ।
भूबीजं विलिखेन्मध्ये बिन्दुसाध्यादिसंयुतम् ॥
तद्बहिर्विलिखेन्मत्री भूसूक्तं परितो लिखेत् ।
भूबीजेन तु संवेष्टय तद्बहिर्विलिखे द्बुधः ॥
चतुर्विंशद्दलं पद्मं तद्दलेषु स मन्त्रवित् ।
विष्णुगायत्रमुद्धार्य तत्तत्कर्मादिभेदतः ॥
श्रीबीजेन तु संवेष्टय द्वात्रिंशद्दलमालिखेत् ।
तद्बहिस्तद्दले सम्यक् मन्त्रराजं नृसिंहकम् ॥
बहिस्स्वराणि विलिखेत् हंसद्वौ व्यञ्जनानि च ।
तारापाशाङ्कुशैर्वेष्टय बहिरिन्द्रादिकं लिखेत् ॥
एतत्सूक्तत्रयैस्सर्वं सर्वेषां सिद्धयति ध्रुवम् ।
मान्त्रिकैः कारयेदेवं क्षत्रविट्शूद्रजातिकम् ॥
राज्यभ्रंशे वंशनाशे ऋणमोक्षे ऋणे भये ।
पूर्वोक्तदोषसंयुक्ते पूर्वोक्तफलसिद्धये ॥
पूर्वोक्तगुणसंयुक्तैः पुरुषसूक्तेन तत्तथा ।
श्रीभूसूक्तेन सिद्धयन्ति सर्वेषां सर्वदा फलम् ॥
इदं गोप्यतमं सत्यं सर्वदा कुरु चाब्जज ।

पुरुषो नारायणः परं ब्रह्म भवति। नारायणमन्त्र एवाङ्गी भवति। पुरुषसूक्तादिविष्णुमन्त्राः अङ्गीभवन्ति। अग्नीन्द्रनीलकण्ठार्काघोरपाशुपत-शैवशाक्तकापालगाणापत्यादयः राजसास्तामसा भवन्ति। विष्णुमन्त्र-स्याऽङ्गमन्त्रा भवन्ति। य एवं वेद। य एवमाचरति। ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ॥

इति महेश्वरोपनिशत् ॥

अङ्गहीने नारायणाद्यङ्गिमन्त्राः फलप्रदा भवन्ति। नारायणाद्यङ्गि-मन्त्रहीने शैवपाशुपतादितामसाङ्गमन्त्राः नरकफलप्रदा भवन्ति। यस्स-र्वज्ञो य एवं वेद ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ॥

इति शिवोपनिषत् ॥

एवं ज्ञात्वा विशेषाणि नित्यनैमित्तिकं क्रमात्।
जपपूजादिहोमान्तं कुर्याद्विप्रस्सदाब्जज ॥

इति शेषसंहितायां अष्टादशोध्यायः.

---

## प्रणवबीजमन्त्रः

नारदः—

देवदेवमहादेव श्रोतुमिच्छामि तत्त्वतः।
बीजमन्त्रविधानादीन् वद मे परमं मम ॥

शेषः—

शृणु वक्ष्यामि देवर्षे प्राणास्थापनकारणात्।
बीजमन्त्राणि विधिना तत्प्रयोगाणि तत्त्वतः ॥

पञ्चरात्रोक्तयुक्तानां शापानुग्रहकारिणाम्।
वैखानसोक्तयुक्तानां प्रतिष्ठाजपसिद्धये ॥

रहस्यानि च बीजानि शृणु मन्त्राणि तत्त्वतः ।
तत्तन्मूर्तिप्रतिष्ठां तु तत्तद्बीजेन कारयेत् ॥
विष्वक्सेनस्य बीजेन भक्तानां नान्यथा भवेत् ।
नित्यानां नित्यबीजैश्च कारयेत् स्थापनादिकम् ॥
वैखानसस्थले सम्यक् तन्मन्त्रेणैव कारयेत् ।
पञ्चरात्रस्थले सम्यक् पञ्चरात्रेण कारयेत् ॥
आवेशनादिसिद्ध्यर्थं अष्टैश्वर्यादिवृद्धये ।
पञ्चरात्रस्थले सम्कक् प्रथमावरणाद्बहिः ॥
तद्विष्ण्वाद्यङ्गमूर्त्यादीन् भक्तद्वाराधिपान्विना ।
पञ्चरात्रोक्तमार्गेण कुर्यात्तत्स्थापनादिकम् ॥
मदुक्तैनैव बीजाद्यैः स्थापनार्चादिकं भवेत् ।
तन्मन्त्रैश्च विधानाद्यैः देवसान्निध्यकारणम् ॥
पौरश्चरणकं कृत्वा तत्तद्बीजानि मन्त्रवित् ।
तद्बीजन्यासहोमाद्यैः कुर्यात्तत्स्थापनादिकम् ॥
तद्देहं मलदेहं स्यात् यद्देहं मन्त्रहीनकम् ।
तद्बीजं प्रतिरूपं स्याद्यद्बीजं मन्त्रहीनकम् ॥
विप्रो विप्रो भवेत्सर्वो वेदमन्त्रादिना सदा ।
मृच्छिलादारुलोहाद्यैः बिम्बस्य विधिनाऽब्जज ॥
देवत्वं लभते सम्यक् वासुदेवो भवेत्सदा ।
भक्त्यावेशो भवेत् क्षिप्रं सद्यो नश्यति अग्निवत् ॥
वेदमूलादिबीजाद्यैः आगमाद्यैश्च सात्त्विकैः ।
आवाहनं भवेत्सम्यक्तत्तिष्ठति न संशयः ॥

यो विप्रस्सात्त्विकाचारात् ब्राह्मणो वेदमार्गगः ।
मन्त्रयोगात्स एव स्यात् ब्रह्मविद्ब्राह्मणो गुरुः ॥
तस्मात्सर्वप्रयत्नेन स मन्त्रज्ञो भवाब्जज ।
यथा देहे तथा बिम्बे न्यासकर्म समाचरेत् ॥
जपहोमादिसर्वेषु प्रतिष्ठाद्युत्सवेषु च ।
विप्राणां प्रणवाद्याश्च वेदमन्त्राः प्रकीर्तिताः ॥
स्मृत्यागमादिमन्त्राश्च सर्वेषां च श्रियादिकम् ।
आदौ मूर्ध्नि समुद्धृत्य दक्षिणश्रवसंयुतम् ॥
तथा जठरमुद्धृत्य बिन्दुनादसमन्वितम् ।
जपेद्ब्रह्मेति तद्ब्रह्मन् सर्वार्थं मोक्षदायकम् ॥

प्रणवस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
नारायणः परं ब्रह्म देवतेति चतुर्मुख ॥
अं बीजं तत उं शक्तिः कीलकं एं ततः परम् ।
श्रीं कवचं ह्रीमित्यस्त्रं श्वेतवर्णमिदं न्यसेत् ॥
षडङ्गं षट्स्वरैर्न्यस्य करे देहे यथाक्रमम् ।
नारायणं विभुं शान्तं प्रणवार्थप्रकाशकम् ॥
श्रीभूसहितमानन्दं हृत्पद्मे सततं भजे ।
व्याप्यं तद्व्यापकं तद्वत्कृत्वा तत्प्रणवेन च ॥
चक्रमुद्रां प्रदर्श्याथ पञ्चलक्षं जपेद्बुधः ।
चतुरङ्गं प्रकुर्वीत मोक्षज्ञानात्मशुद्धये ॥
अश्वत्थब्रह्मसमिधैः गोघृतैस्तिलपायसैः ।
जुहुयाद्ब्रह्मनिष्ठस्तु मोक्षधर्मार्थसिद्धये ॥

किमत्र बहुनोक्तेन विप्रस्सर्वस्सदा जपेत् ।
श्वेतपुष्पैस्तुलस्या च वासुदेवं समर्चयेत् ॥
गोक्षीरेण स मन्त्रज्ञः तर्पयेत्प्रणवेन तु ।
एतद्योगाख्यविप्रस्य फलं वक्तुं न मादृशैः ॥
एतदुक्तप्रकारेण कल्पयेन्मन्त्रवित्तमः ।
ब्रह्महत्त्यादिपापानां लक्षमेकं विधीयते ॥
सर्वोपपातकानां च कल्पयेच्चित्तमेव तु ।
महारोगादीनां सम्यक् अयुतं कल्पयेद्द्विज ॥
क्षुद्ररोगादीनां चेदं पञ्चसाहस्रकं भवेत् ।
पूर्वोक्तद्रव्यभेदेन षट्कर्मसु युजेत्तथा ॥
पौरश्चरणमार्गेण चातुरङ्गः प्रयोजयेत् ।
सर्वेषां बीजमन्त्राणां होमादिकमिदं भवेत् ॥
मध्येतारं विलिख्याऽथ बिन्दुसाध्यसमन्वितम् ।
तद्बहिर्विलिखेदष्टपद्मे मूलं लिखेन्मनुम् ॥
लिखेत्तु पौरुषं सूक्तं पतितं परितो बहिः ।
श्रीबीजेन सुसंवेष्ट्य श्रीसूक्तं तद्बहिर्लिखेत् ॥
हंसहंसेति रक्षेति साध्यन्तु स्वरसंयुतम् ॥
पाशाङ्कुशेन संवेष्ट्य इन्द्रादीन् बहिरालिखेत् ॥

इति श्रीशेषसंहितायां एकोनत्रिंशोऽध्यायः.

---

## अङ्गाङ्गिविचारः

शेषः—

श्रीमन्नारायणस्याथ अङ्गाङ्गविषयं तथा ।
अङ्गाङ्गिबीजादिकं च वक्ष्यामि विधिना शुचे ॥

वेदान्तवेद्यो यज्ञेशो अङ्गीनारायणस्सदा ।
तस्य नारायणस्याङ्गं वेदोपनिषदस्तथा ॥
तद्वेदानां षडङ्गानि छन्दश्शब्दश्चतुर्मुख ।
कल्पस्तु ज्यौतिषं चैव शिक्षास्तत्तन्निरुक्ततः ॥
ततस्तु तत्षडङ्गानां मीमांसा तच्चतुःक्रमात् ।
न्यायः पुराणं तद्वत्तु धर्मशास्त्रं तथा भवेत् ॥
ततस्तच्चतुरङ्गानां अङ्गाश्चत्वार एव च ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्च चतुर्मुख ॥
अस्त्रशास्त्रक्रमादेवं ज्ञात्वा स्वाङ्गानि भेदतः ।
कुर्याद्धर्मादिकं सर्वं मदुक्तेनैव मार्गतः ॥
शुद्धसत्वं राजसं च तामसं सात्त्विकं तथा ।
तद्वाक्यमन्त्रमन्त्रादीन् ज्ञात्वाकुर्याच्चतुर्मुख ॥
गायत्रीं प्रणवं मूलं द्वयं विष्णुं सुदर्शनम् ।
नारसिंहं वराहं च हयग्रीवं तुरीयकम् ॥
रामं कृष्णं वासुदेवं केशवादीन् तदस्त्रकान् ।
अङ्गिमन्त्रा इतिज्ञेया वेदान्तेषु सुनिश्चितम् ॥
एत एव सदा जप्याश्शुद्धसत्वाश्शुभावहाः ।
कर्मज्ञानसुभक्त्यादिप्रपत्यन्तफलप्रदाः ॥
प्रणवादि जपेद्भक्त्या विप्रास्तद्वेदमार्गतः ।
नारायणाङ्गमन्त्राणां क्रमेण कमलासन ॥
राजसाङ्गादिमन्त्रादीन् शृणु सर्वं यथातथम् ।
ब्रह्माग्नीन्द्रादिसोमादीनादित्यादीन् नवग्रहान् ॥

हनुमत्कार्यवीर्यादि मन्त्रा राजससंज्ञिताः ।
तद्विष्णोरङ्गिमन्त्राणां तामसाङ्गान्मनून् शृणु ॥
शिवं रुद्रं पाशुपतं अघोरं नीलकण्ठकम् ।
शम्भुं पिनाकिं त्रिपुरं महादेवं महेश्वरम् ॥
सदाशिवं कपर्दिं च शङ्करं चेन्दुशेखरम् ।
मृत्युञ्जयं हरं चोग्रं भैरवं वीरभद्रकम् ॥
गाणायत्यं तामसादीन् दुर्गां तत्पार्वतीं शिवाम् ।
रौद्रीं पाशुपतीं घोरां नीलकण्ठीं च शाम्भवीम् ॥
पिनाकीं त्रिपुरां तद्वद्देवीं माहेश्वरीं तथा ।
सदाशिवां तु कापर्दीं शांकरीं चन्द्रशेखरीम् ॥
मृत्युंजयां जटीं हारां उग्रां तद्भैरवीं तथा ।
कालरात्रीं भद्रकालीं चण्डां कात्यायनीं उमाम् ॥
गौरीं भवानीं रुद्राणीं अम्बिकां चण्डिकां तथा ।
पद्मावतीं पार्वतीं च कपर्दीं विघनां सदा ॥
तामसाङ्गा इति ज्ञेया एते सर्वे चतुर्मुख ।
शुद्धसत्वं परं ब्रह्म वासुदेवस्य सर्वदा ॥
तद्विद्याद्यङ्गमन्त्राणां सात्त्विकाङ्गान् क्रमात् शृणु ।
तच्छ्रीं भूमिं तथा नीलां तद्भक्तस्तत्वतस्तथा ॥
अनन्तादीन् तथा ब्रह्मन् गारुडादीन् तथादितः ।
चक्रादीन्वासुदेवस्य विष्वक्सेनादिकान् तथा ॥
धर्मादीन्कौस्तुभादींश्च पादुकादीन्विशेषतः ।
द्वारपालान् तथादित्यान् कुमुदादीन् यथाविधि ॥

शुद्धसत्त्वऋषीन् देवान् यज्ञान् व्यूहान् तथाब्जज ।
विप्रश्रेष्ठादिमुक्तादीन् सत्त्वकर्मरतान् तथा ॥
सत्त्वज्ञानरतांस्तद्वत् सत्त्वभक्तियुतांस्तथा ।
नित्यज्ञानप्रपत्त्यादियुक्तांस्तद्वत् चतुर्मुख ॥
पञ्चरात्ररतांस्तद्वत्क्रमेण कमलासन ।
सात्त्विकाङ्गानीति विदुः एते सर्वेपि सात्त्विकाः ॥
वासुदेवाङ्गिमन्त्रस्य साङ्गास्तदितरे क्रमात् ।
अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् ॥
अयोग्यः पुरुषो नास्ति प्रयोक्ता तत्र दुर्लभः ।
सात्त्विका ऋषयस्त्वेते प्रयोक्तारस्त एव हि ॥
एवं विशुद्धसत्त्वाच्च स प्रपन्नो जितेन्द्रियः ।
स एव लोकान् जयति स याति परमं पदम् ॥
तच्छिष्यपुत्रभक्ताश्च प्रपन्नत्वमवाप्नुयुः ।
तद्वज्जयति लोकेऽस्मिन् स याति परमं पदम् ॥
राजसा ऋषयः ये तु ते वै स्वर्गप्रवर्तकाः ।
तद्भक्तस्स्वर्गमाप्नोति निश्चितं सततं त्विह ॥
तामसा ऋषयस्त्वेते युक्तास्ते निरये सदा ।
तद्भक्ताः पुत्रशिष्याद्याः पाषण्डविधिगर्हिताः ॥
ते यान्ति नरकं घोरं रौरवं रोमसंख्यया ।
सात्त्विका विष्णुभक्ताश्च राजसास्सत्यलोकिनः ॥
तामसाश्शिवभक्ताश्च रौद्रं परममब्जज ।
ब्रह्मवादिनो वदन्ति रहस्यमिदमेव हि ॥

विप्रादिसर्ववर्णानां ज्ञातव्यं हरिसिद्धये ।
एवं ज्ञात्वा जपेन्नित्यं मोक्षधर्मार्थसिद्धये ॥
वासुदेवाङ्गमन्त्रस्य पञ्चाङ्गान् शृणु सर्वदा ।
जपतर्पणहोमादिपूजातद्भोजनादिकम् ॥
पञ्चाङ्गा एत एव स्युः मन्त्रज्ञानात्मासिद्धये ।
त्रिभिर्वर्षैः त्रिभिर्मासैः त्रिभिः पक्षैः त्रिभिर्दिनैः ॥
अत्युत्कटैः पुण्यपापैः इहैव फलमश्नुते ।
हरदत्तं ब्रह्मदत्तं फलं दुर्घटमुत्तमम् ॥
तच्छक्त्या दत्तमत्युग्रं विष्णुमन्त्रेण नश्यति ।
सुदर्शननृसिंहस्य मन्त्रेणैव च सर्वदा ॥
विष्णुमन्त्रेण सर्वेषां चतुरङ्गेण चाब्जज ।
तन्निष्ठमान्त्रिकाचाररतेन विधिना सदा ॥
मान्त्रिकस्य च राज्ञां च षट्कर्माणि च दुर्लभम् ।
लभते धर्मकामादीन् प्राप्नोति परमं पदम् ॥
शिवादिक्षुद्रमन्त्राद्यैः फलं क्षुद्रमवाप्नुयात् ।
इहैव लभते सर्वं वत्सरत्रितयात्परम् ॥
शत्रोरायुष्यमैश्वर्यं सर्वं चापि क्षणत्रये ।
नृसिंहाद्युग्रमन्त्रैश्च हिरण्यदशकादिवत् ॥
नश्यन्ति सततं ब्रश्चन् धर्मसंस्थापनाय च ।
देवब्राह्मणरक्षार्थं मत्सायुज्यादिहेतवे ॥
प्रणवाद्यादिमन्मन्त्रान् जपेद्ब्रह्मविदब्जज ।
ये जपन्ति च मन्त्राणि मदर्थे विनियुज्यते ॥

स एव मत्पिता माता स एव जगतः पिता ।
तस्मै मुक्तिं प्रदास्यामि इहैव लभते फलम् ॥

## बीजमन्त्रविधिः.

प्रणवाद्यादिबीजाद्यैः वैष्णवैः बीजमन्त्रकैः ।
सुरक्षां विजयं सौम्यात् परविद्यादिनाशकात् ॥
षट्कर्माणि तथा कुर्यान्मन्त्रतन्त्रादिवित्सदा ।
जपमात्रं प्रतीकं स्यात् तर्पणं हय एव च ॥
होमः गजस्समाख्यातः रथः पुष्पाञ्जलिर्भवेत् ।
कोशः तदन्नदानं स्यात् नृपो मन्त्रविदब्जज ॥
चातुरङ्गविधानस्य आचार्यः एक एवच ।
अनजप्याः स्तोत्रमूलाः मालामन्त्रांस्तु वैष्णवान् ॥
उपजप्याधिकं कुर्यात्पुराणाध्ययनं ततः ।
शक्तयधीनं तु कृत्वा तु स्वगृहे च विशेषतः ॥
शान्तिकर्मविधानेन कारयेन्मण्टपादिकम् ।
शुभयोगादिकाले च तत्कर्तुरनुकूलभे ॥
पुण्याहं कारयेन्मन्त्री मन्त्राङ्गाद्यादिभेदतः ।
दिनमेकमुपोष्याथ पञ्चगव्यं पिबेत्ततः ॥
शङ्खादिसर्ववाद्यैश्च स्वस्ति वाच्य समन्त्रकम् ।
रक्षाबन्धं ततः कुर्यात् पश्चात्कर्म समारभेत् ॥
एकाक्षरादिपञ्चान्तं षड्गुणं कारयेद्बुधः ।
षडादीन् द्वादशान्तं तु त्रिगुणं जीवसंङ्ख्यया ॥

द्वादशानुष्टुभान्तं च होमादि द्विगूणं भवेत् ।
पूजातर्पणहोमादीन् एवमानुष्टुबङ्गके ॥

एकाङ्गैष्षड्गुणान् जप्त्वा द्व्यङ्गेषु त्रिगुणं भवेत् ।
त्र्यङ्गैस्तु त्रिगुणं चैव चतुरङ्गे तथैव च ॥

स्वपक्षे त्रीणि षट्चैव अथ प्रायोगिकन्तथा ।
चतुरङ्गबलं कुर्यान्न्यासादिकमतन्द्रितः ॥

कुण्डमण्डलमानेन तत्तत्कर्माणि योजयेत् ।
तत्तद्रव्यादिभेदेन बीजमन्त्रान् प्रयोजयेत् ॥

बीजमन्त्रेण सिध्यन्ति विप्राणां सर्वमब्जज ।
गुह्याद्गुह्यतमं लोके बीजमन्त्रादिनिर्णयः ॥

बीजमन्त्रप्रयोगो वै रहस्यतममब्जज ।
सर्ववेदान्तसारं च सर्वविद्यान्तसारकम् ॥

सर्वेषां सर्वदा गोप्यं देवर्षीणां च दुर्लभम् ।
मद्बीजाक्षरमन्त्राणां श्रियादीनां तथाब्जज ॥

वेदैश्शास्त्रैः सर्वविद्यैश्शक्यं वक्तुं न मादृशैः ।

### श्रीबीजमन्त्रः.

वान्तं यान्तं समारूढं मायाबिन्दुविभूषितम् ।
श्रियो बीजमिदं प्रोक्तं नृणां सद्यश्श्रियावहम् ॥

श्रीबीजस्यास्य मन्त्रस्य ब्रह्मा ऋषिरुदाहृतः ।
छन्धश्च देवी गायत्री विष्णुपत्नीह देवता ॥

अं बीजं च तु रं शक्तिः कीलकं ह्रीं चतुर्मुख ।
एं कवचं अं अस्त्रं रक्तवर्णमरे विभुम् ॥

इति कृत्वा ऋषिन्यासं कुर्यान्मन्त्रविदब्जज ।
षडङ्गं षट्स्वरैर्न्यस्य करे देहे सुमन्त्रवित् ॥
व्याप्यं तद्व्यापकं चैव तद्बीजेनैव कारयेत् ।
पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ॥
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ।
पूर्वावरणसंयुक्तं जपेल्लक्षचतुष्टयम् ।
चन्दनागरुकर्पूरजलेनैव च तर्पयेत् ।
कमलैर्बिल्वपत्रैश्च पूजयेदङ्गसङ्ख्यया ॥
कमलायुतहोमेन याति श्रियमनुत्तमाम् ।
बिल्वपत्रैश्च जुहुयात् अयुतं गोघृतैस्सह ॥
अष्टैश्वर्यमवाप्नोति सन्देहो नास्ति निश्चयः ।
अयुतं बिल्वपत्रेण शत्रुराज्यं लभेत्सदा ॥
यद्बीजस्य विशेषेण वदन्ति फलमुत्तमम् ।
तत्फलं शीघ्रमाप्नोति क्रमेणान्यान्यवाप्नुयात् ॥
चातुरङ्गविधानेन सिद्ध्यन्त्यत्र न संशयः ।
श्रीसूक्तयन्त्रमेव स्यात् श्रीयन्त्रं सम्यगब्जज ॥
प्रयोगभेदान् भेदेन पञ्चावस्थान् चतुर्मुख ।
स्वप्नजाग्रत्सुषुप्त्यादीन्मरुतां वक्ष्यते तवा ॥
प्रणवादिबीजमन्त्राणां अन्ते तद्विधिना सह ।
स्वशिष्याय सुवृत्ताय सम्यग्ब्रह्मविदे वदेत् ॥
अन्येषां वक्ष्यते चेत्तु ब्रह्महत्त्या फलं लभेत् ।
तस्मात्सर्वप्रयत्नेन गोपयेदेतदब्जज ॥

इति श्रीशेषसंहितायां विंशोध्यायः.

---

## भूबीजमन्त्रः

शेषः—

पर्यायेण प्रवक्ष्यामि भूबीजं प्रीतिपूर्वकम् ।
नीलाबीजं ततस्सम्यक् न्यासहोमादिपूर्वकम् ॥
सान्तयान्तसमायुक्तं महामायाविभूषितम् ।
भूबीजं बिन्दुसंयुक्तं भूलाभादि प्रदापयेत् ॥
अस्य श्रीभूमिमन्त्रस्य पितामहऋषिस्तथा ।
विष्णुपत्नी देवता च अं बीजं शक्तिरं तथा ॥
श्री कीलकं ह्री कवचं ऐं अस्त्रं रक्तवर्णकम् ।
तद्बीजेन षडङ्गं तु कुर्यात्पूर्ववदब्जज ॥
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ।
विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम् ॥
लक्ष्मींप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ।
जपेल्लुक्षत्रयं मन्त्री चातुरङ्गैस्सहाब्जज ॥
स्मरान्विष्णुं श्रियाद्युक्तं हृत्कोष्ठे सततं जपेत् ।

## दहरविद्या.

क इति ब्रह्मणो नाम ष इति स्थानमुच्यते ।
तदेव दहराकाशः इति वेदान्तबेदितम् ॥
द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च ।
द्वा सुपर्णा सयुजा सखाया समानं वृक्षमिति क्रमात् ॥
दहराकाशे ब्रह्मनिष्ठःप्रणवार्थप्रकाशकम् ।
नारायणं परं ब्रह्म वासुदेवं परात्परम् ॥

ध्यानं कुर्वन् जपेद्विद्वान् होमयेत्तर्पयेत्सदा ।
एवं क्रमेण यः कुर्याद्विधिना सर्वदाऽब्जज ॥
स एव परमैकान्ती स प्रसन्नो गुरुस्सदा ।
पञ्चरात्रेण मार्गेण एवं कुर्यादहर्निशम् ॥
संदेहश्चेत्क इत्यत्र शृणु वक्ष्यामि तत्त्वतः ।
ब्रह्मादयः पञ्च एते ततो बोधायनः परम् ॥
आपस्तम्बः तथा तद्वत् तद्वद्विखनसः क्रमात् ।
चक्रादयो ह्यनन्ताद्याः विष्वक्सेनादयस्तथा ॥
वसिष्ठाद्याश्च ऋषयः तच्छिष्यास्सात्त्विकाः स्मृताः ।
पञ्चसंस्कारसंयुक्ताः पञ्चकालपरायणाः ॥
पञ्चरात्रागमोक्तादियुक्ता वैदिकतान्त्रिकाः ।
एत एव ब्रह्मनिष्ठाः मद्भक्तास्सततं त्विह ॥
एत एव महापूज्या दहराकाशवेदिनः ।
अन्ये च बहवस्सन्ति तामसाद्याः क्रमेण च ॥
कृपयामत्कटाक्षाद्वा तेपि यान्ति परां गतिम् ।
सत्यं सत्यं पुनस्सत्यं निश्चयश्चायमब्जज ॥
दहराकाशसन्मार्गध्यानाचारादिकं शुभम् ।
शास्त्रादिपाठकाः केचित् केचिद्वेदादिपाठकाः ॥
वेदान्तपाठकाः केचित् पुराणस्मृतिपाठकाः ।
मद्भक्ताः अलसाः केचित् न जानन्त्यथ मां स्मृताः ॥
एकं जन्मावलम्ब्यापि वेदान्तश्रवणाच्च ते ।
दहराकाशमभ्यस्य तेपि यान्ति परां गतिम् ॥

वेदान्तपाठकास्सर्वे दहराचारकश्शुकः ।
तस्मात्सर्वप्रयत्नेन जपध्यानपरो भव ॥
हृत्पुण्डरीकसंस्थानब्रह्मवित् ब्राह्मणोत्तमः ॥

### स्पर्शदोषः

क्षत्रविट्शूद्रजात्यादिस्पृष्टिदोषं परित्यजेत् ।
स्पृष्टिदोषात्तथा सर्वजप्याद्यं निष्फलं भवेत् ॥
अकर्मकस्य संस्पृष्टिं त्यजेत् भिषजवाणिजान् ।
स्वबन्धून् स्वगुरुं चापि त्यजेदेव न संशयः ॥

### विवाह्यकन्या.

यो मातुलसुतां तद्वत् गुरुपत्नीसमां तथा ।
तथा स्वगुरुशिष्यस्य भगिनीसमकन्यकाम् ॥
कन्यां मातृसमां तद्वत्सहोदर्यादिकां तथा ।
विवाहं कुरुते मोहात् ताः कन्याः मातृवत्त्यजेत् ॥
गृहे भिन्ने तु निक्षिप्य रक्षेदन्नादिना सदा ।
तस्यास्संस्कारकं कुर्यात् मृते पिण्डे नियोज्य च ॥
तत्कन्यासङ्गवान्मोहात् पुत्रोत्पत्त्या विवाहतः ।
स द्विजः पशुरेव स्यात् सर्वकर्मबहिष्कृतः ॥
स याति नरकं घोरं रौरवं रोमसंभ्यया ।
कर्मज्ञानप्रपत्त्यादि तस्य निष्फलतां व्रजेत् ॥
अष्टैश्वर्यादिकं सर्वं तस्य वंशक्षयो भवेत् ।
अज्ञानाद्गुरुशिष्याणां विवाहः लभ्यते तदा ॥

स्वगुरोः गोत्रजां त्यज्य तदन्यं गुरुमाश्रयेत् ।
कुलं संशोध्य संबन्धं तां कन्यां वरयेद्बुधः ॥
स्त्रीशुद्धिरर्थशुद्धिश्च द्वयमाचारकारणम् ।
यस्यैतद्द्वयं नास्ति तस्याचारो विडम्बना ॥
अयमेव परो धर्मः सर्वशास्त्रेषु निश्चितः ।

## वपनम्

न स्पृशेदिति चोक्तं चेत् वक्ष्यामि च चतुर्मुख ।
केशश्मश्रूणि वपते नखानि निकृन्तते तथा ॥
शिखाभ्रूकोष्ठवर्ज्यं स्यात् सर्वाङ्गं नच नान्यथा ।
अथ श्मश्रूण्यथो वक्षः अथ केशान्ते भवति विधिस्तथा ॥
स्वसूत्रेणैव मार्गेण आपस्तम्बादिना तथा ।
अङ्गुष्ठमात्रा शिरसि वृत्तरूपा शिखा भवेत् ॥
विरोः षडङ्गुलादूर्ध्वे कल्पयेयुः द्विजातयः ।
शिखाभ्रुवौ वर्जयित्वा कर्णादुपरि बुद्धिमान् ॥
श्मश्र्वादि कल्पयेत्पश्चात् सर्वाङ्गं वर्जयेत्तथा ।
वेदोक्तवत्तद्वपनं तदाश्मश्र्वाद्यनन्तरम् ॥
वक्षः नखानि कृन्त्येवं गृहस्थस्य तथाब्जज ।
शिखाभ्रुवौ वर्जयित्वा सर्वाङ्गं तद्वदब्जज ॥
श्मश्रू वक्षः तथा केशान् कर्णादुपरि सवदा ।
अधस्ताद्वपनं सम्यक् ज्ञानधर्मार्थसिद्धये ॥
ब्रह्मचर्ये च सन्यासे भ्रूशिखावर्जनं तथा ।
कर्णादुपरि वपनं यावज्जीवं न संशयः ॥

मासिमासि गृहस्थानाँ पक्षेपक्षे च यज्वनाम् ।
ऋतौऋतौ यतीनां च वपनं श्रुतिबोधितम् ॥
अन्यथा ये करिष्यन्ति त एव श्रुतिघातकाः ।
त एव च विकर्मस्थाः सर्वकर्मबहिष्कृताः ॥
कर्मज्ञानप्रपत्त्यादिः तस्य धर्मो निरर्थकः ।
जपहोमादिसिद्ध्यादि मोक्षस्तस्य न विद्यते ॥
त्याज्योपादेयकं सर्वं स्वधर्मं सम्यगब्जज ।
सम्यक् ज्ञात्वा शुचिर्भूत्वा स्वधर्मजपमाचरेत् ॥
शूद्रादिसर्ववर्णानां मद्भक्तानां तथाब्जज ।
कर्णादुपरिमुण्डत्वं वपनं श्रूं विना सदा ॥

## वस्त्रादिवेषः

शूद्रादिसर्ववर्णानां वसनं चित्रकं भवेत् ।
कृष्णवस्त्रन्तु शूद्राणां वैश्यानां रक्तवस्त्रकम् ॥
पीतवस्त्रं क्षत्रियाणां विप्राणां श्वेतवस्त्रकम् ।
वृत्ताकारन्तु शूद्राणां चित्रकं क्षत्रवैश्ययोः ॥
अग्रे द्विनेत्रवत्कृत्वा पश्चादेकं निधाय च ।
मद्भक्तानां तु विप्राणां शिरोवेष्टनलक्षणम् ॥
यः करोत्यन्यथा तस्मात् सर्वं नश्यति तस्य वै ।

## अन्नशुद्धिः

नैमित्तिकादिकश्राद्धे अन्नशुद्धिश्चतुर्मुख ।
विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ॥

पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ।
अन्नं भाण्डद्वये कुर्यात् द्वयं विष्णोस्समर्पयेत् ॥
एकेन नित्यमुक्तादीनर्पयेद्विधिपूर्वकम् ।
अन्येन चाग्निहोत्रं च विश्वेदेवौ पितॄन् सदा ॥
वैश्वदेवादिकं कृत्वा तच्छेषैस्तद्द्वयं सदा ।
वृद्धबालादिभिस्सम्यक् भुञ्ज्यादतिथिना सह ॥
अन्नशाकादिशुद्धिश्च पूर्वोक्तं दर्शयन् चरेत् ।
तत्सूपान्नादिकं सर्वं एकीकृत्य समन्त्रकम् ॥
आर्द्रक्रमुकमात्रेण कारयेत्कबलानि तत् ।
तत्तन्मन्त्रादिना सम्यक् भुञ्जीयात्संख्यया सदा ॥
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम् ।
द्वात्रिंशतं गृहस्थस्य अमितं ब्रह्मचारिणाम् ॥
एवं कुर्याद्विधानेन मोक्षधर्मार्थसिद्धये ।
परमैकान्तिनां धर्मो गतिरन्यत्र नान्यथा ॥
एवं कुर्याद्विधानेन जपज्ञानात्मशुद्धये ।

## भूबीजशेषः

मन्त्रबीजादिशुद्ध्यर्थं एवमुक्तं चतुर्मुख ।
भूबीजस्य च यच्छेषं वक्ष्यामि च यथातथम् ॥
पायसेन हुनेन्मन्त्री अयुतं गोघृतैस्सह ।
स्वदेशं स्वस्ति लभते सर्वैश्वर्यादिना सह ॥
पूर्ववत्तिलहोमेन पूर्वदेशाधिपो भवेत् ।
अपामार्गैः पूर्ववच्च याम्यदेशाधिपो भवेत् ॥

कमलैः पूर्ववद्धोमे जलदेशाधिपो भवेत् ।
खादिरैः कमलैर्होमे कुबेरस्य दिशस्तथा ॥
अश्वत्थबिल्वहोमेन मोक्षधर्ममवाप्नुयात् ।
तर्पयेद्विधिना ब्रह्मन् कर्पूरसहिताम्बुना ॥
पूजयेच्छ्रीतुलस्या तु चतुरङ्गविधानतः ।
तत्तद्द्रव्येण हुत्वा वै तत्तत्फलमवाप्नुयात् ॥

### उच्चारणविधिः

उच्चारणविधिं वक्ष्ये मन्त्राणां सिद्धये सदा ।
अनुस्वारो ध्रुवो बिन्धुः यष्टिश्चन्द्रार्थ उच्यते ॥
अनुस्वारो न्दकारश्च ध्रुवो बिन्दुमकारकः ।
यष्टिश्चन्द्रार्थक इति रहस्यं मन्त्रसिद्धये ॥
सर्वेषां न वदेदेवं धार्मिकाय वदेत्सदा ।
वेदपाठे अनुस्वारः जपादिष्वसबिन्दुकम् ॥
सामगानां तु आकारः विनियोगमिदं परम् ।
श्लोकत्रयेण संक्षिप्तं प्रयोगमिदमद्भुतम् ॥
तवोपरिकृपा जाता तस्मादुक्तं चतुर्मुख ।
यन्त्रतन्त्रादिकर्माणि वदेत्सर्वं यथातथम् ॥
श्लोकत्रयन्तु न वदेत् वदेच्छुश्रूषया क्वचित् ।
तद्बिन्दोर्लक्षणं त्रीणि अथ मात्राश्च नादकम् ॥
नादातीतन्तु विज्ञेयं पूर्वोक्तार्थार्थसिद्धये ।
मोक्षे तु अर्धमात्रा च नादस्सौम्ये चतुर्मुख ॥
नादातीतं क्रूरकर्मण्येतन्मूले प्रयोजयेत् ।

मालामन्त्रोक्तवद्ध्यायन् जपेदब्दमहार्निशम् ॥
लंकाधिपं राघवेशो यथा कृत्वा तथा सदा ।
जयमाप्नोति सर्वत्र मोक्षार्थं च सुदुर्लभम् ॥
मासत्रयेण सौम्यानि सिद्ध्यन्ति च न संशयः ।
दिनत्रयेण सिद्ध्यन्ति क्षुद्रकार्याणि सर्वदा ॥
यस्य स्मरणमात्रेण वाग्विभूतिर्विजृम्भते ।
तांस्तान् लोकान् क्षोभयन्ति दर्शनादेव साधकः ॥
सृष्टिस्थित्यन्तकर्माणि सिध्यन्ति स्मरणात् ध्रुवम् ।

## हयग्रीवसिद्धिः

एतद्ध्याने हयग्रीवः अब्देनैकेन सिद्ध्यति ।
स्नानभोज्यदिकं सर्वं मन्त्रेणैव न संशयः ॥
इह जन्मनि सिद्ध्यन्ति वेदव्यासवदद्भुतम् ।
अश्रुतानखिलान्वेदान् साङ्गोपाङ्गान् सशास्त्रकान् ॥
मान्त्रिकस्यैव सिद्ध्यन्ति व्याख्यानं कुरुते स वै ।
आकर्षणादिमुद्रां च ध्यानमण्डलभेदकः ॥
सुविद्याकर्षणं कृत्वा स्तम्भनं तद्वदाचरेत् ।
स्ववक्त्रे तु हयग्रीवं श्वेतचन्द्रार्धमण्डले ॥
तन्मण्डलं चाग्निमध्ये ध्यायन्सम्यक् चतुर्मुख ।
पीतं वादिमुखे तद्वत् पीतं पार्थिवमण्डले ॥
पाशबीजेन बध्नीयात् अङ्कुशेन गजं यथा ।
भावं वादिमुखे ध्यात्वा स्तम्भयेत्तस्य भारतीम् ॥
इत्येवं वासना कार्या मन्त्राणां सिद्धये सदा ।

रहस्यमुक्तं सर्वं च नास्ति किंचिदितः परम् ॥
बीजमन्त्राणि तन्त्राणि वक्ष्ये यन्त्राणि चाब्जज ।
सम्यग्लोकहितार्थाय प्रपन्नानां चतुर्मुख ॥

## प्रणवार्थः

अकारादिमकारान्तं देवतानिर्णयं शृणु ।
इति चैकप्रकारोऽस्ति सिद्धान्तमिदमब्जज ॥
आकारार्थोऽथ विष्णुस्स्यात् अव्ययः पुरुषः प्रभुः ।
उकारार्थश्श्रीर्हि यैव लोकमाता सदा रमा ॥
जीव एव मकारार्थः पीताभस्स्यात्तनूपमा ।
पवित्रोऽग्निस्सहस्रारो बिन्द्वर्थस्स्यात्सुदर्शनः ॥
नादार्थश्च नृसिंहस्स्यात् ऊर्ध्वरेतास्त्रिलोचनः ।
हरिरेवार्धमात्रार्थः बहुलक्ष्मीपतिर्भवेत् ॥
नारायणस्स्याद्यज्ञेशो नादान्तार्थैकगोचरः ।
नादातीतार्थको ब्रह्मा सूर्यनारायणो भवेत् ॥
नादातीतान्तार्थकस्स्यात् रामचन्द्रः परात्परः ।
नादातीतान्तार्थकस्स्यात् सर्वेशः केशवः परः ॥
नादातीतान्तार्थ एव भवेद्ब्रह्मा परात्परः ।
सर्वं स्यात् वासुदेवोऽयं अव्ययः पुरुषोत्तमः ॥
नादातीतान्तान्तरस्य अर्थस्स्यात् भगवान् हरिः ।
परात्परो वासुदेवो आनन्दाख्यस्सुमूर्तिकः ॥
नादस्य नादातीतस्य नादान्तान्तस्य च लक्षणम् ।
स्वच्छद्रव्यकृतैव स्यात् दीर्घघण्टा निनादवत् ॥

एतन्मात्रात्परं सर्वं वक्तुं शक्यं न मादृशैः ।
अकाराद्यर्थान्तान्तं च प्रणवं तच्चतुर्मुख ॥
सर्वं खल्विदं ब्रह्म ओमिति ब्रह्म उच्यते ।
आनन्दमयो ब्रह्मेति स एको ब्रह्मण आनन्द इति च ॥
ब्रह्मा नारायणास्सिद्धः नारायणाद्ब्रह्मादयो जायन्त इति स्यात् ।
नारायण परं ब्रह्म तत्त्वं नारायणः परः ॥
नारायण परो ज्योतिरात्मा नारायणः परः ।
स एको ब्रह्मण आनन्द इति सर्वं चतुर्मुख ॥
न चासनसमासिद्धिः न कुम्भसदृशो यमः ।
न खेचरीसमा विद्या न नादसदृशो लयः ॥
यमादिनादपर्यन्तमुक्तं सर्वं चतुर्मुख ।

## लयनिरूपणम्

लयः किमिति वेद्वक्ष्ये श्रोतॄणां वस्तुदुर्लभम् ॥
लयः प्रकृतिनाशः स्यात् त्रैगुण्यमलमब्जज ।
शेषशेषिप्रकारेण शेषी नारायणस्सदा ॥
जीवस्तु शेषस्तस्यैव लय एतादिति स्मृतः ।
इत्युक्त्वा सततं ब्रह्मन् तथाभोगलयं सदा ॥
स्वांशविङ्कलयं तद्वत् स्याल्लयं हृदयङ्गमम् ।
तद्वद्योग्यलयं सम्यक् आराधनलयं सदा ॥
तत्तद्भोग्यलयं तद्वत् लयं तदुपचारिकम् ।
सर्व वस्तुलयं तद्वत् तत्तथाश्रवणं लयम् ॥
तच्छास्त्रपाठकलयं साहित्यादिविना भिषक् ।

तत् षट्कर्मलयं तद्वत् तद्दानलयमब्जज ॥
तद्वन्नत्यलयं तच्च तल्लास्यलयमुत्तमम् ।
तच्छुश्रूषालयं तद्वदलंकारलयं तथा ॥
तत्प्रतिष्ठालयं तद्वत्तद्भक्तस्थापनं लयम् ।
धर्मसंस्थापनलयं सदाचारलयं तथा ।
अन्नशुद्धिलयं तद्वन्नित्यनैमित्तिकं लयम् ॥
तत्सत्कर्मलयं तद्वत्तज्ज्ञानलयं तथा ।
तत्सद्भक्तिलयं तद्वत् शुद्धसत्त्वलयं तथा ॥
सन्मानसलयं सर्वं वासुदेवस्य चार्पणात् ।
शेषशेषिप्रकारेण विष्णौ जीवं समर्पयेत् ॥
श्रवणं पूर्वमेव स्यात् मननं तदनन्तरम् ।
तन्निदिध्यासैव लयं तस्माज्जपलयं कुरु ॥
तन्निदिध्यासनलयं आप्नोति विधिनाऽब्जज ।
एतद्गुणसमायुक्तो जीवो यस्तु प्रसन्नकः ॥
स एव परमैकान्ती स सन्नयासी चतुर्मख ।
एतत्क्रमेण सर्वन्तु अभ्यस्यन्जन्मभेदतः ॥
जपध्यानलये सम्यक् विष्णुसायुज्यमाप्नुयात् ।
पापक्षयादि जीवानां एकजन्मनि संभवेत् ॥
एतल्लयक्रमेणैव जीवात्मपरमात्मनोः ।
सत्यमेव तथा ब्रह्मन् विष्णुसायुज्यमुच्यते ॥
यदेतन्निश्चितार्थं वै पीताभा स्यात्तनूपमा ।
तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ॥

इति सिद्धान्तः स्यात्—

वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥

दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकं तस्मिन्यदन्तस्तदुपासितव्यम् ॥

यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

इदं शृणोत्यखिलं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।
इति मुमुक्षुः ब्रह्म उपासीत सिद्धमेव न संशयः ॥

विष्णोस्संबन्धसंबन्धादिदानीमपि पावनी ।
यथा गङ्गा तथा जीवः स्याद्विष्णुस्मरणाच्छुचिः ॥

दूर्वासाश्शिव इन्द्राद्या वाल्मीक्याद्यास्तु तत्समाः ।
विष्णुसंबन्धसंबन्धात् पूज्यत्वं तदवाप्नुयुः ॥

## देवताविचारः.

चतुर्थ्यन्तो देवतेति उक्तश्चेत्तदयुक्तकम् ।
आयेति च चतुर्थ्यन्तो द्व्यक्षरं नमनं न हि ॥

यज्ञमुख एव ब्रह्म अग्निर्वै यज्ञमुखस्तथा ।
यज्ञो वै विष्णुरित्युक्तं न जानाति विमूढधीः ॥

विष्णवेति मनुस्सिद्धं विष्णुशब्दो हि देवता ।
आयेति च चतुर्थ्यन्तस्तदेव मनुरुत्तमः ॥

विष्णोरेवेदं सर्वं आयेत्यर्थस्सुनिश्चयः ।
विष्णोरेव हि तुभ्यं स्यात् नममेतीति निश्चयः ॥
अहं नारायणस्साक्षात् अङ्गं आय चतुर्मुख ।
अङ्गिहीने फलं नास्ति अङ्गहीने फलं भवेत् ॥
प्रार्थना वा चतुर्थ्यन्तः फलं दास्यति वा नवा ।
विष्णुरेव ददातीह चतुर्थ्यन्ताङ्गसेवनात् ॥
चतुर्थ्यन्तोऽङ्ग इति चेत् एकाङ्गेन न सिद्ध्यति ।
होमतर्पणपूजादि भोजनाद्याः चतुर्मुख ॥
अङ्गाश्चत्वार एवैते मन्त्रस्य फलदायकाः ।
मन्त्रार्थोऽङ्गी देवता च होमाद्या अङ्गतां गताः ॥
घटकोऽत्र चतुर्थ्यन्तः स्यादनन्यार्ह इत्यपि ।
अनन्यार्हो न भवतीत्युक्तिमात्रेण किं फलम् ॥
चतुर्थ्यन्तो गुरुसमो मन्त्राणां सिद्धये क्वचित् ।
गुरोस्समः चतुर्थ्यर्थः श्रोतुं वक्तुं न शक्यते ॥
मन्त्राणां पल्लवास्सन्ति बहुबोधः प्रवर्तते ।
हुंफडादीन् नमोन्तांश्च परिहर्तुं न शक्यते ॥
अङ्गाङ्गि इति मन्त्राणामङ्गीकुर्मस्सदाब्जज ।
चतुर्थ्यन्तश्शब्दो देव इति चेदज्ञ एव सः ॥
श्वभ्यश्च श्वपतिभ्यश्च वो नमो नमः ।
कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः ॥
इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नमः ।
ग्रावाणः प्लवन्ते एते च देवशब्दाः चतुर्थ्यन्ताः ॥

क्षुद्रस्य स्यात्फलं किञ्चित् चतुर्थ्येव च निष्फलं ।
केरलद्राविडाद्यश्च तथा राक्षसशब्दवत् ॥

आकारार्थो हि लक्ष्मी स्यात् यकारार्थोऽनिलस्तथा ।
आयशब्दो द्विदैवत्यः शब्दस्यार्थो हि देवता ॥

लक्ष्मीवाय्वादिदेवाद्या विष्णोरङ्गाश्चतुर्मुख ।
देवता परमात्मा च परं ज्योतिः परात्परः ॥

श्रीभूनीलाधिपश्चक्री भगवान्यज्ञनायकः ।
यज्ञेशो यज्ञभोक्ता च यज्ञाङ्गो यज्ञवाहन ॥

सर्वेश्वरो जगन्नाथो वासुदेवः परात्परः ।
युष्मत्संदर्शनार्थाय रहस्यमिदमब्जज ॥

## नीलाबीजम्

अधरोष्ठं समुद्धृत्य मायाबिन्दुसमन्वितम् ।
नीलाबीजमिदं ब्रह्मन् सर्वेषां मोहकारणम् ॥

नीलामन्त्रऋषिर्धाता छन्दोऽनुष्टुप्तथा भवेत् ।
देवता विष्णुपत्नी च नीं बीजं शक्तिः एं ततः ॥

ह्रीं कीलकं ह्रीं कवचं क्लीमस्त्रं श्यामवर्णकम् ।
तद्बीजेन षडङ्गन्तु कुर्यात्तत्तत्स्वरैस्सदा ॥

व्याप्यं तद्व्यापकश्चैव तद्बीजेनैव कारयेत् ।
अविभक्तसदानन्दां विष्णुवक्षस्थलस्थिताम् ॥

सर्वाभरणभूषाङ्गीं नीलां तां सततं भजे ।
चातुरङ्गविधानेन जपेल्लक्षत्रयं ततः ॥

तुलस्या पूजयेत्पश्चात् तर्पयेत्कुङ्कुमाम्भसा ।
मधुत्रयेण जुहुयात् अयुते त्रिशतं जपेत् ॥

धूपद्रव्येण जुहुयात् तद्वद्राजा वशो भवेत् ।
चणपुष्पैर्यजेत्तद्वत् जगद्वश्यं भवेदिह ॥

लाजहोमेन लभते अन्यां विद्याश्रियं तथा ।
तत्तद्द्रव्येण जुहुयात् तत्तत्सिद्धिमवाप्नुयात् ॥

कमलैः श्रीतुलस्या च अर्चयेद्विष्णुवक्षसि ।
सुकर्मादि प्रपत्त्यन्तं पाञ्चरात्रं तु सात्त्विकम् ॥

लभेत पञ्चरात्रेण सर्वान् कामान् चतुर्मुख ।

इति शेषसंहितायां एकविंशोऽध्यायः

---

## मत्स्यमूर्तिबीजम्

शेषः—

तत्तन्मूर्त्यादि बीजादीन् वक्ष्ये सम्यग्यथातथम् ।
प्रतिष्ठाद्युत्सवाद्यादिसिद्धये मुक्तये सदा ॥

प्रणवं तच्छ्रिया युक्तं भूनीलातत्समन्वितम् ।
तत्तज्ज्ञानार्थसिद्ध्यर्थं मनुश्च चतुरक्षरी ॥

पर्यायेण न जानन्ति कपर्दीन्द्रशिवादयः ।
वासुदेवस्स्वयंपूर्वं श्रीभूनीलादिनां तथा ॥

शङ्खचक्रादिकं दत्वा प्रणवं संप्रयच्छति ।
अनन्तगरुडादीनां विष्वक्सेनस्य तद्यथा ॥

चक्रादिधारणं कृत्वा पूर्वोक्तचतुरक्षरीम् ।
उपदिश्य तथा ब्रह्मन् नरनारायणाश्रमे ॥
नरस्य तद्वत्कृत्वा च वसिष्ठाद्यादिकान् तथा ।
वेदव्यासस्य भर्गस्य वैकुण्ठपदवासिनाम् ॥
चतुर्मुखस्य वायोश्च चन्द्रसूर्याग्निनाकिनाम् ।
स्वस्य चक्रादिकं कृत्वा ददौ च चतुरक्षरीम् ॥
चतुर्मुखस्य सृष्ट्यादौ मत्स्यरूपः हरिस्स्वयम् ।
हयग्रीववपुर्ध्यात्वा पूर्वोक्तचतुरक्षरीम् ॥
हयग्रीवस्य बीजञ्च मत्स्यबीजं सहादितः ।
तप्तचक्रादिकं कृत्वा मनुमतं प्रयच्छति ॥
उपदिश्य च वेदादिं अन्तर्धानमवाप्नुयात् ।
तल्लक्षणं तथा वक्ष्ये तत्तद्बीजद्वयस्य च ॥
विषं दक्षिणकर्णेन बिन्दुनादसमन्वितम् ।
मत्स्यबीजमिदं प्रोक्तं भवेत्संहारकारकम् ॥
मन्त्रस्यास्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ।
मत्स्यरूपहरिर्देवो मंबीजं शक्तिश्श्रीं तथा ॥
ह्रीं कीलक मैं कवचं ऐं अस्त्रं रक्तवर्णकम् ।
श्वेतवर्णं तथा ब्रह्मन् षडङ्गं षट्स्वरैर्न्यसेत् ॥
व्याप्यं तद्व्यापकं चैव कुर्यान्मन्त्रेण मन्त्रवित् ।
दंष्ट्राकरालमत्युग्रं शङ्खचक्रधरं विभुम् ॥
मत्स्यरूपं हरिं ध्यायेत् सर्वविद्याप्रदायकम् ।
चातुरङ्गविधानेन जपेल्लक्षद्वयं शुचिः ॥

पूजयेत् श्रीतुलस्या तु गोक्षीरेणैव तर्पयेत् ।
अयुतं जुहुयान्मन्त्री बालरावैर्घृतैस्सह ॥
शत्रुनाशो भवेत्तस्य सर्वविद्यां लभेत्तथा ।
अपामार्गस्य हवनात् सर्वसिद्धिं लभेत्सदा ॥
तत्तद्द्रव्यादिहोमेन तत्तत्फलमवाप्नुयात् ।

## हयग्रीवबीजम्

अतः परं प्रवक्ष्यामि हयग्रीवमनुं तथा ॥
सान्तं षान्तं बिन्दुयुतं प्रणवान्तसमन्वितम् ।
हयग्रीवमिदं बीजं सर्वविद्याप्रदायकम् ॥
मन्त्रस्यास्य ऋषिर्ब्रह्मा विधिना तत्तथाब्जज ॥
छन्दश्च देवी गायत्री हयग्रीवश्च देवता ।
हं बीजं तु च श्रीं शक्तिः कीलकं ऐं स्मरन् न्यसेत् ॥
क्लीं कवचं ह्रीमस्त्रं श्वेतवर्णं चतुर्मुख ।
षडङ्गं षट्स्वरैर्न्यस्य पूर्वोक्तं संस्मरन् जपेत् ॥

ध्यानम्—

वन्दे पूरितचन्द्रमण्डलगतं श्वेतारविन्दासनं
मन्दाकिन्यमृताब्जकुन्दकुमुदक्षीरेन्दुहासं हरिम् ।
मुद्रापुस्तकशङ्खचक्रविधृतश्रीमद्भुजामण्डलं
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥
चातुरङ्गविधानेन जपेल्लक्षचतुष्टयम् ।
पूजयेत्कमलैस्सम्यक् तर्पयेद्गन्धवारिणा

ब्राह्मीघृतसमायुक्तमयुतं जुहुयाच्छुचिः ।
तत्क्षणादेव सिद्धा स्यात् मूकस्यापि सरस्वती ॥
मुण्डीवचासमायुक्तं गुग्गुलं च मधुत्रयम् ।
योजयेत्तत्क्षणात्सम्यक् सश्रुवश्शुभजन्मनि ॥
अश्रुतान्यपि वेदानि सर्वशास्त्राणि सर्वदा ।
व्याख्यानं कुरुते सम्यक् मन्त्रवित्साधकोत्तमः ॥
त्रिसन्ध्यं यस्तथाऽऽहारे शतं जप्त्वा जलं पिबेत् ।
अग्न्यादीनभिमन्त्र्याथ कुर्यादेवमहर्निशम् ॥
अब्दमेकं तु यः कुर्यान्मूकश्शास्त्री भवेत्तदा !
प्रत्यहं यः त्रिसंध्यायां अष्टाविंशति वा जपेत् ॥
क्रमेण लभते विद्यां हयग्रीवेण चाब्जज ।

## कूर्मबीजम्

ब्रह्माक्षरं वह्नियुतं वामकर्णेन संयुतम् ।
बिन्दुना कूर्मबीजं स्यात् सर्वस्तम्भनकारकम् ॥
ऋषिश्शिवोऽस्य मन्त्रस्य पङ्क्तिश्छन्दः प्रजापते ।
कूर्मरूपः हरिर्देवो ह्रीं बीजं शक्तिश्श्रीं तथा ॥
ऐं कीलकं क्लीं कवचं लमस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य कूर्मबीजेन संयुतम् ॥
व्याप्यं तद्व्यापकं कुर्यात्तन्मन्त्रेण सुबुद्धिमान् ।
शङ्खचक्रधरं देवं सर्वाभरणभूषितम् ॥
सर्वाकारमजं देवं कूर्मरूपं हरिं भजे ।
चातुरङ्गविधानेन जपेल्लक्षत्रयं तथा ॥

पाटलैस्तु सुसंपूज्य तर्पयेत् कुङ्कुमाम्भसा ।
अपामार्गेण जुहुयात् अयुतं घृतसंयुतम् ॥

सर्वसिद्धिं लभेत्सम्यक् तद्वल्लाजातिलैर्भवेत् ।
भूलाभं लभते सोऽयं सन्देहो नास्ति निश्चयः ॥

तत्तद्द्रव्यादिहोमेन तत्तत्फलमवाप्नुयात् ।
मण्ठलध्यानभेदादीन् ज्ञात्वा मन्त्रं जपेत्तथा ॥

मोक्षञ्च लभते सत्यं विधिना तच्चतुर्मुख ।

इति श्रीशेषसंहितायां द्वाविंशोऽध्यायः.

---

## वराहबीजम्

शेषः—

अथ वक्ष्ये विधानेन वराहैकाक्षरं शुभम् ।
नृसिंहैकाक्षरं तद्वत् भुक्तिमुक्तिफलप्रदम् ॥

सान्तदक्षिणकर्णेन बिन्दुनादसमन्वितम् ।
वाराहं बीजमित्युक्तं लक्ष्मीधनधराप्रदम् ॥

ऋषिर्तथाऽस्य मन्त्रस्य गायत्री छन्द उच्यते ।
यज्ञवराहो देवता हं बीजं शक्तिश्रीन्तथा ॥

ह्रीं कीलकं एं कवचं एं अस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य वाराहैकाक्षरेण च ॥

व्याप्यं तद्व्यापकं चैव तद्बीजेनैव कारयेत् ।
शङ्खचक्रधरं देवं सर्वाभरणभूषितम् ॥

श्रीभूनीलादिसहितं भजे यज्ञवराहकम् ।
चातुरङ्गविधानेन जपेल्लक्षद्वयं शुचिः ॥
पूजयेच्छतपत्रैस्तु गोक्षीरेण च तर्पयेत् ॥
श्वेतपद्मैस्तु जुहुयाद्राज्यकामो यथाविधि ।
अयुतं बिल्वपत्रैश्च लक्ष्मीकामस्तु पूर्ववत् ॥
धनकामो यजेन्मन्त्री चण्डपुष्पैस्तु पूर्ववत् ।
लभते तिलहोमेन लक्ष्मीलाभमनुत्तमम् ॥
अपामार्गसमिद्धोमात्सर्वसिद्धिं लभेत्सदा ।
तत्तद्द्रव्येण जुहुयात् तत्तत्फलमवाप्नुयात् ॥
शिवस्यापि च देवत्वं वराहैकाक्षरादभूत् ।

## नृसिंहबीजम्

नृसिंहैकाक्षरस्यापि प्रभावं तच्चरित्रकम् ॥
संग्रहेण तथा वक्ष्ये मृत्योस्स्यात्कालपञ्चकम् ।
नृसिंहो भगवान् ब्रह्मन् अन्तर्गामी नृकेसरी ॥
भक्तसंरक्षणार्थाय लोकसंरक्षणाय च ।
हिरण्यकसिपुं हत्वा तद्रूपेण सदाशिवम् ॥
हन्तुमभ्यागतं रौद्रं शरभं नरकेसरी ।
नखैर्विदारयामास हिरण्यकशिपुं यथा ।
वराहैकाक्षरयुतं नृसिंहैकाक्षरं तथा ।
प्रह्लादाय सुभक्ताय प्रपन्नाय मुमुक्षवे ॥
तप्तचक्रादिकं कृत्वा तन्मन्त्रं संप्रयच्छति ॥

क्षकारं वह्निसंयुक्तं प्रणवान्तसमन्वितम् ।
नृसिंहैकाक्षरं मन्त्रं इदं संहारकारकम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
देवता नरसिंहश्च परमात्मा हरिस्स्वयम् ॥
क्षं बीजं तत्र नीं शक्तिः कीलकं ह्रीं चतुर्मुख ।
यमस्त्रं रं तु कवचं रक्तवर्णं विभुं स्मरेत् ।
षडङ्गं षट्स्वरैर्न्यस्य नृसिंहैकाक्षरेण च ॥
व्याप्यं तद्व्यापकं चैव कुर्यात्सम्यक्स्मरन् शुचिः ॥

उद्यद्भास्वत्सहस्रप्रभमशनिनिभं त्रीक्षणैर्विस्फुरन्तं
वह्नावह्नाय विद्युत्ततीवितसटाभूषणं भूषणैश्च ।
दिव्यैरादीप्तदेहं निशितनिखिलसद्बाहुदण्डैरनेकैः
संभिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥

चातुरङ्गविधानेन जपेल्लक्षचतुष्टयम् ।
अशोकैः करवीरैश्च बिल्वपत्रैश्च पूर्वकैः ॥
रक्तपुष्पैः तुलस्या च पूजयेन्नृहरिं सदा ।
चूर्णाम्भसा तर्पयित्वा होमं कुर्याच्चतुर्मुख ॥
अयुतं जुहुयान्मन्त्री अर्ककाष्ठैः कटुत्रयैः ।
निम्बकाष्ठैस्तथा तैलैः शीघ्रमुच्चाटकारकम् ॥
खादिरैर्निम्बतैलाक्तैः अर्ककाष्ठैः कटुत्रयैः ।
मारणे जुहुयान्मन्त्री ध्यानमण्डलभेदतः ॥
स्तम्भने जुहुयान्मन्त्री करवीरैस्सभीतकैः ।
क्रूरकर्मसु सर्वेषु अपामार्गैः कटुत्रयैः ॥

ध्यानमण्डलभेदज्ञः पूर्वोक्तेनैव संख्यया ।
मारयेदद्भुतं मोहात् रक्षितं दैवतैस्तु वा ॥
तत्तद्द्रव्येण जुहुयात्तत्तत्फलमवाप्नुयात् ।
चिरकालनिवासार्थं कर्मज्ञानात्मशुद्धये ॥
त्रैगुण्यमलनाशार्थं तदेतद्ध्यानमाचरेत् ।
तन्तुपञ्जरमध्यस्थं यथा भ्रमति लूतिका ॥
प्राणारूढश्चरति यो जीवस्तेन विना न हि ॥
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।
इदन्तमिष्टं वैनन्मध्यं नाभिरिष्यते ॥
तत्र चक्रं द्वादशारं आहुर्मासाक्षराणि च ।
विष्ण्वादिमूर्तयस्तेषु द्वादश द्वादशस्वापि ॥
अहं तत्र स्थितश्चक्रं भ्रामयामि स्वमायया ।
अरेषु भ्रमते जीवः क्रमेण कमलासन ॥
स्वराशेरष्टमे वापि चतुष्के द्वादशेपि वा ।
सप्तमे मेषराशौ वा तज्जीवस्थितराशिषु ॥
चातुर्ग्रहादिसंप्राप्ते कूर्मग्रहसुयुक्तके ।
जीवस्य पार्श्ववेधादौ समदृष्टौ ग्रहोदये ॥
पार्श्वे वेधादिसंप्राप्ते गण्डान्ते ग्रहसन्धिषु ।
दशाच्छिद्रेषु गोचारे ग्रहे वक्रगते सति ॥
विचार्य विधिवद्ब्रह्मन् देहे जीवदले हृदि ।
बाह्ये तत्तत्तार्क्ष्यरूढं नृहरिं संस्मरन्विभुम् ॥
श्वेतवर्णं विरूपाक्षं विश्वाक्षं विश्वतोमुखम् ।
षट्कोणस्थं तथा ध्यायन् नृसिंहैकाक्षरं जपेत् ॥

ग्रहवेधान्तपर्यन्तमित्येव कारयेद्बुधः ।
यद्येवं कुरुते ज्ञात्वा परदेहं कृपां तदा ॥
तस्य मृत्युभयं नास्ति स चिरायुश्च जीवति ।
ब्रह्मविट्छूद्रजातीनां महारोगादिसम्भवे ॥
एवमेव प्रकुर्वीत ध्यानमन्त्रविशारदः ।
देवता ऋषयस्सर्वे जीवन्त्येतत्क्रमात्सदा ॥
नास्त्येतत्सदृशं कर्म भुक्तिमुक्तिप्रसिद्धये ।
खचराद्यादिसिद्ध्यर्थं इममेव विधिं चरेत् ॥
मण्डलाद्रोगनाशस्स्यात् ऋषित्वं वत्सरात्सदा ।
अब्दत्रयात्तु देवत्वं ब्रह्मत्वं पञ्चवत्सरात् ॥
मोक्षसिद्धिस्तु निमिषात् पातकानां क्षयो भवेत् ।
अश्वमेघादिकं सर्वं दिनेनैकेन सिद्ध्यति ॥
एतद्ध्यानस्य सदृशं वक्तुं शक्यं न मादृशैः ।
एतद्ध्यानादियोगेन जपेदेतच्चतुर्मुख ॥

इति शेषसंहितायां त्रयोविंशोध्यायः.

---

## सुदर्शनबीजम्

शेषः—

सम्यग्वक्ष्ये विधानेन बीजं सौदर्शनं तथा ।
सुदर्शननृसिंहस्य बीजमन्त्रादिरूपकम् ॥
बीजं तद्वद्विशेषेण नारसिंहसुदर्शनम् ।
षान्तं सान्तं वह्नियुतं द्वन्द्वं वाह्निसमप्रभम् ॥

सौदर्शनमिदं बीजं सर्वसंहारकारकम् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ॥
सुदर्शनो देवता च सं बीजं शक्तिरं तथा ।
हं कीलकं यं कवचं ह्रीं अस्त्रं रक्तवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेनैव संस्मरन् ।
व्याप्यं तद्व्यापकं कुर्यात् स्मरंश्चक्रवदब्जज ॥
सहस्रादित्यसङ्काशं सहस्रवदनाम्बुजम् ।
सहस्रदोस्सहस्रारं प्रपद्येहं सुदर्शनम् ॥
चातुरङ्गफलाद्यादि नृसिंहैकाक्षरं यथा ।
सर्वेषां नित्यमुक्तानां देवर्षिणां नृणां तथा ॥
सृष्टिस्थित्यन्तहेत्वर्थं तत्तद्दोषनिवृत्तये ।
सर्वबन्धविनाशार्थं मोक्षधमार्थसिद्धये ॥
चक्रादिधारणं कृत्वा वासुदेवस्स्वयं हरिः ।
इदं च त्र्यक्षरं मन्त्रं चक्रस्य द्वन्द्वरूपकम् ॥
दत्वा सम्यक् विधानेन रक्षिष्यति पुनःपुनः ।

## सुदर्शननृसिंहबीजम्

तद्वक्ष्ये द्व्यक्षरं चेदं एकं पूर्वं सुनिश्चितम् ।
वान्तं वह्निसमायुक्तं उत्तरोष्ठसमावृतम् ॥
बिन्दुनादसमायुक्तं सर्वसंहारकारकम् ।
सौदर्शननृसिंह्मस्य बीजमेतच्चतुर्मुख ॥
ऋषिर्धाताऽस्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
सुदर्शननृसिंहेति देवता च चतुर्मुख ॥

फं बीजं तु च हं शक्तिः कीलकं रं महामते ।
कवचं यं रक्तवर्णं स्मरन् सर्वो जपेद्बुधः ॥
षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेन यथाविधि ।
व्याप्यं तद्व्यापकं चैव कुर्यान्मण्डलभेदतः ॥

ध्यानम्—

विश्वरूपमुदाराङ्गं सुदर्शननृकेसरिम् ।
ज्वालामालाधरं देवं भजे तं विश्वतोमुखम् ॥
चातुरङ्गान् फलान् तद्वत् नृसिंहैकाक्षरं यथा ।
लान्तं विषसमायुक्तं वह्निमान्तसमन्वितम् ॥
षष्ठस्वरं बिन्दुयुतं लोकसंहारकारकम् ।
नृसिंहचक्रराजस्य बीजं स्यात् ज्योतिरूपकम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
नृसिंहचक्रराजस्तु देवता च चतुर्मुख ॥
क्षं बीजं तु च ॐ शक्तिः कीलकं यं तथा स्मरन् ।
कवचं रं तदेवास्त्रं रक्तवर्णं विभुं स्मरन् ॥
षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेनैव कारयेत् ।
व्याप्यं तद्व्यापकं चैव स्मरन् तत्रादिभेदतः ॥
ज्योतिर्मुखमुदाराङ्गं साकारं सर्वतोमुखम् ।
नृसिंहचक्रराजं तं भजे वैकुण्ठनायकम् ॥
होमादींस्तत्फलं तद्वत् नृसिंहैकाक्षरं यथा ।
एतत्तत्र्यक्षरेणैव सर्वसिद्धं लभेत्सदा ॥

इति शेषसंहितायां चतुर्विंशोऽध्यायः.

---

## वामनबीजम्

शेषः—

वामनैकाक्षरं सम्यक् त्रैविक्रममनुं तथा ।
तत्तन्मार्गेण वक्ष्येथ परशमस्य लक्षणम् ॥
लान्तं वृत्तसमायुक्तं बिन्दुनादसमन्वितम् ।
वामनं बीजमित्युक्तं सर्वाकर्षप्रदं शुभम् ॥
ऋषिर्वसिष्ठो मन्त्रस्य पङ्क्तिश्छन्द उदाहृतम् ।
देवता वामनः प्रोक्तो वं बीजं शक्तिह्रीन्तथा ॥
अं कीलकं यं कवचं मं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेन यथाक्रमम् ॥
व्याप्यं तद्व्यापकं चैव स्मरन् सम्यक् चतुर्मुख ।
कमण्डलुं यज्ञसूत्रं सशिखं छत्रधारिणम् ॥
तेजःपुञ्जमयं देवं वामनं पुरुषं भजे ।
भूसूक्तस्य प्रकारेण भवेद्धोमादिकं फलम् ॥

## त्रिविक्रमबीजम्

णान्तं वह्निसमायुक्तं मायाबिन्दुसमन्वितम् ।
त्रैविक्रमामिदं बीजं सर्वैश्वर्यप्रदायकम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
त्रिविक्रमो देवता च तं बीजं शक्तिश्रीं तथा ॥
ह्रीं कीलकं ऐं कवचं यं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववन्न्यसेत् ॥
शङ्खचक्रधरं देवं विभुं तेजोमयं प्रभुम् ।
त्रिविक्रमं वासुदेवं तं भजे विश्वरूपिणम् ॥

भूबीजवत् सर्वविधं भवेद्धोमफलादिकम् ।
परामादिमूर्तीनां आवेशानां चतुर्मुख ॥
नास्ति तद्वद्बीजमन्त्रं संस्काराणां तु शैववत् ।

इति शेषसंहितायां पञ्चविंशोऽध्यायः.

---

## श्रीरामबीजम्

शेषः—

श्रीरामैकाक्षरं वक्ष्ये बलरामविधानतः ।
कृष्णबीजं ततः पश्चात् मोहदेवादिलक्षणम् ॥
यान्तवृत्तसमायुक्तं बिन्दुनादविभूषितम् ।
कालानलसमप्रख्यं रामबीजमिति स्मृतम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दोनुष्टुभमेव च ।
देवता रघुवीरश्च रं बीजं शक्तिश्रीं तथा ॥
ह्रीं कीलकं ऐं कवचं यमस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेन यथाविधि ॥
व्याप्यं तद्व्यापकं चैव कुर्यात्तन्मन्त्रविच्छुचिः ।
आकर्णमाकृष्टधनुर्गुणोद्यद्ब्रह्मास्त्रलक्षीकृतराक्षसेन्द्रम् ।
रथाधिरूढं रणरङ्गधीरं रामं भजे रक्तसरोरुहाक्षम् ॥
श्रीरामैकाक्षरेणैव रुद्रश्च सततं पुरा ।
सदाशिवत्वं प्राप्याथ गुरुत्वं चक्रधारणात् ॥
गौतमाद्यास्तथा देवाः पार्वती च सरस्वती ।
तत्तत्स्थलमवाप्याथ सिद्धानाहुर्विशारदाः ॥

श्रीरामैकाक्षरजपात् रुद्रः पूज्योऽभवत्सदा ।
तारकब्रह्ममित्युक्तं श्रीरामैकाक्षरं परम् ॥
श्रीसीतेति च तत् ज्ञात्वा जपेद्राममनुं सदा ।
धर्मकामार्थमोक्षार्थी जपेद्रामं चतुर्मुख ॥
जपहोमफलं सर्वं नृसिंहैकाक्षरं यथा ।
श्रीरामाङ्गप्रतिष्ठादि रामबीजेन कारयेत् ॥

## बलरामबीजम्

फकारान्तं बिन्दुयुतं सर्वव्याधिविनाशनम् ।
बलराममिदं बीजं सर्वशान्तिकरं भवेत् ॥
ऋषिर्गार्ग्योऽथ मन्त्रस्य त्रिष्टुप् छन्दस्तथैव च ।
देवता बलरामश्च ओं बीजं शक्तिरां तथा ॥
ळं कीलकं यं कवचं अं अस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववच्चरेत् ॥
शङ्खचक्रधरं देवं वरदं हलधारिणम् ।
सर्वशान्तिकरं देवं बलरामहरिं शुभम् ॥
श्रीमत्स्यमन्त्रवत्सर्वं बलराममनोस्सदा ।

## कृष्णबीजम्

कान्तान्तमिन्द्रसंयुक्तं महामायाविभूषितम् ।
बिन्दुनादसमायुक्तं कृष्णबीजमिति स्मृतम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता मोहगोपालः क्लीं बीजं शक्तिर्ह्रीं तथा ॥
श्रीं कीलकं ऐं कवचं यं अस्त्रं श्यामवर्णकम् ।

षडङ्गं षट्स्वरैर्न्यस्य तद्बीजेनैव संस्मरेत् ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥

अंसालम्बितहेमकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचीप्रसारेक्षणम् ।
आलोलाङ्गुलपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गललसितं ध्यायेज्जगन्मोहनम् ॥

चातुरङ्गविधानेन कुर्यात्तन्मन्त्रसिद्धये ।
ध्यानमण्डलभेदज्ञो जपेल्लक्षत्रयं बुधः ॥
नीलोत्पलैः पूजयित्वा तर्पयेच्चन्दनाम्भसा ।
वश्यार्थी जुहुयान्मन्त्री गुग्गुलं घृतसंयुतम् ॥
मोहार्थी जुहुयाद्धूपं चन्दनञ्च मधुत्रयैः ।
आकर्षे जुहुयादग्नौ अपामार्गैः कटुत्रयैः ॥
कन्यार्थी लाजहोमात्तु राज्यार्थी पङ्कजैर्यजेत् ।
द्रव्यार्थी बिल्वपत्रैस्तु सर्वार्थी तिलहोमतः ॥
साध्यनामादिकं योज्य यजेतायुतसङ्ख्यया ।
तत्तद्धोमे तत्फलं स्यात् सत्यमेव न संशयः ॥
देवादिऋषयस्सर्वे मान्मथेनैव सर्वदा ।
तत्तद्धोमजपादेव तत्तत्फलमवाप्नुयात् ॥
स्थापनं कृष्णबीजेन तदङ्गादिविधिः भवेत् ।

**बीजमन्त्राधिकारः**

क्षत्रविट्शूद्रजातीनां विष्णुबिम्बार्चनं भवेत् ।
तद्बिम्बस्य प्रतिष्ठां तु बीजमन्त्रं विना भवेत् ॥

प्रणवं बीजमित्युक्तं वेदास्तद्वच्चतुर्मुख ।
बीजेन प्रणवेनैव वेदमन्त्रैश्शुचिर्गुरुः ॥
पञ्चरात्रेण तन्त्रेण तत्तद्बीजविधानतः ।
विप्रार्चनादिबिम्बानां प्रतिष्ठां कारयेत्सदा ॥
विप्राणां मोक्षसिद्ध्यर्थं धर्मकामार्थसिद्धये ।
पूर्वोक्तमन्त्रतन्त्राद्यैः विष्णुस्थापनकं भवेत् ॥
तद्बिम्बस्य तथा पूजां पूर्वमन्त्रक्रमाद्भवेत् ।
तत्तन्मन्त्रेण यजनात् मुमुक्षुर्भवति ध्रुवम् ॥
अमन्त्रपूजनान्मोहाद्विप्रो निरयमाप्नुयात् ।
श्रुतिरेव तु विप्राणां गतिरन्यत्र नान्यथा ॥
क्षत्रविट्शूद्रजात्यादिबिम्बानां स्थापनं सदा ।
पञ्चरात्रेण तन्त्रेण वेदमन्त्रादिकं विना ॥
तत्तत्सूक्तादिमन्त्रेण विप्रस्तन्मन्त्रपारगः ।
तत्तद्बीजप्रतिष्ठादीन् कुर्यादेव न संशयः ॥
कुर्याद्यः ह्यन्यथा चेत्तु विप्रो याति यमालयम् ।
यो वा अयथादैवतमग्निं चिनुते आ देवताभ्यो वृश्च्यते ॥
पापीयान् भवतीत्येतत् प्रत्यक्षं श्रूयते श्रुतिः ।
क्षत्रियाद्यादिबिम्बानां वेदमन्त्रादिकं विना ॥
पञ्चरात्रेण मन्त्राद्यैः प्रतिष्ठां कारयेद्द्विजः ।
क्षत्रविट्शूद्रजात्यादिमद्भक्तानां च तद्विधिः ॥
तत्तन्त्रमन्त्रबीजस्य पूजां तद्वच्चतुर्मुख ।
यः पूजयति मद्भक्तो मन्त्ररत्नादिकैस्सह ॥
पञ्चरात्रेण तन्त्रेण विट्कर्म प्रणवं विना ।

स एव ब्रह्मवेत्ता च स याति परमं पदम् ।
स च पूज्यो द्विजश्रेष्ठः एतद्बिम्बं न संस्पृशेत् ॥
तत्तत्तद्विधिना भिन्ने तत्तद्बिम्बान्प्रपूजयेत् ।
तत्तज्जातिप्रभेदेन तत्तद्धर्मादिमन्त्रकैः ॥
तत्तन्मन्त्रैस्तु तद्बिम्बान् पूजयेन्मोक्षसिद्धये ।
धर्मकामार्थसर्वार्थं तत्तद्बीजान् प्रकल्पयेत् ॥
अन्यमन्त्रेणान्यबिम्बः पूजितश्चेत्फलं न हि ।
न च मोक्षो न धर्मश्च तस्य नास्ति शुभं कुलम् ॥
तस्माद्रामादिमूर्त्यादीन् तत्तन्मन्त्रेण पूजयेत् ।
अन्यथा ये करिष्यन्ति तेऽपि यान्ति यमालयम् ॥
रामागारे कृष्णमूर्तेः स्थापनं तद्विधिस्तथा ।
तत्तद्बिम्बप्रतिष्ठायां तत्तन्मन्त्रास्तथाऽब्जज ॥
तथा पूजा तथा मन्त्रः तथा ध्यानादिकं फलम् ।
कर्तव्यं सर्ववर्णानां विधिरन्यत्र नान्यथा ॥
बहुबिम्बे यथा पूजा प्रधानस्यैव कारयेत् ।
यद्बिम्बं कुलदेवस्तु तद्बिम्बन्तु प्रधानकम् ॥
तद्बिम्बपूजनादेव सर्वस्तृप्तो भवेत्सदा ।
नित्यमुक्तान् श्रियाद्यादीन् पूजयेत्तद्वदब्जज ॥
चातुरङ्गप्रसिद्ध्यर्थं उक्तमेतद्विधानकम् ।

### सन्तानगोपालबीजम्.

अन्यत्रैकाक्षरान्नास्ति पुत्रगोपालमुत्तमम् ॥
खान्तमिन्द्रानिलयुतं प्रणवान्तं सबिन्दुकम् ।
पुत्रगोपालबीजं स्यात् पुत्रसन्तानकारणम् ॥

ऋषिर्नारद इत्युक्तो गायत्रं छन्द उच्यते ।
देवता पुत्रगोपालो गं बीजं शक्तिरां तथा ॥
ह्रीं कीलकं श्रीं कवचं क्लीं अस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यार्दीन् पूर्ववत्क्रमात् ॥
चक्रपद्मधरं देवं श्वेतपद्मोपरिस्थितम् ।
तं देवं पुत्रगोपालं अच्युतं विभुमव्ययम् ॥
लक्षमेकं जपेद्भक्त्या चत्वारिंशत्सहस्रकम् ।
चातुरङ्गविधानेन कुर्याद्ध्यानं चतुर्मुख ॥
पूजयेद्बिल्वपत्रैश्च गोक्षीरेण च तर्पयेत् ।
जुहुयात्पायसान्नेन गोघृतेनैव साधकः ॥
अयुतेन लभेत् पुत्रं श्रीकृष्णसदृशं विभुम् ।
तिलैर्वा जुहुयातत्तल्लाजहोमं घृतेन तु ॥
प्रातःकाले त्रिसन्ध्यं वा जलं धृत्वा शतं जपेत् ।
ध्यात्वा जप्त्वा कृष्णरूपं पुरुषस्तज्जलं पिबेत् ॥
प्रातःकाले तु मां ध्यात्वा शयने मन्त्रविद्द्विजः ।
विष्णुर्योनिं कल्पयतु अक्षीभ्यां तज्जपेत्स्मरन् ॥
स वर्षार्धे लभेत्पुत्रं मान्त्रिकस्तु न संशयः ।
स्त्रीणां चेदाज्यमामन्त्र्य बीजेनायुतमब्जज ॥
अनुष्टुभं शतं जप्त्वा विष्णुर्योन्यादिकान् दश ।
दूर्वामूलान् घृते स्थाप्य तथाश्वत्थस्य चन्दनम् ॥
तद्घृतं प्रत्यहं सम्यक् पिबेत्प्रातः वधूस्तथा ।
एतत्कर्मघृतेनैव तत्पुत्रं समवाप्नुयात् ॥

यन्त्रविधिः

तद्यन्त्रधारणं कुर्यात् वक्ष्ये यन्त्रस्य लक्षणम् ।
षट्कोणं चक्रमालिख्य कोणे त्वेकाक्षरं लिखेत् ॥
कोणान्ते मान्मथं लिख्य मुद्रां सन्धौ लिखेद्बुधः ।
स्वराणि तद्बहिर्लिख्य हंसहंसेत्यनन्तरम् ॥
रक्षरक्षपदं योज्य साधुकर्मविदङ्कितम् ।
परितो लिख्य सन्मन्त्री पौरश्चरणसाधकः ॥
पाशाङ्कुशेन संवेष्टय बीजादिन्द्रादिकान् लिखेत् ।
तन्मध्ये साध्यसंज्ञां तु तद्बीजं विलिखेद्बुधः ॥
प्राणप्रतिष्ठां कृत्वाऽथ यन्त्रस्योक्तविधानतः ।
सा पुत्रं प्राप्नुयात्तद्वत् एतद्यन्त्रस्य लक्षणम् ॥
सम्यक्सन्तानकामानां गतिरन्यत्र नान्यथा ।
बौद्धादिदेवदेवानां मन्त्रतन्त्रादिकं न च ॥
वेदबाह्यादि देवाद्यास्तामसा निधनप्रदाः ।
वेदबाह्यप्रतिष्ठादीन् ये कुर्वन्ति विमोहिताः ॥
ते यान्ति नरकं घोरं रौरवं रोमसङ्ख्यया ।
सौगतज्ञानदेवादीन् सन्त्यजेद्बौद्धमब्जज ॥
अशुद्धमार्गसंस्पर्शात् बौद्धशास्त्रप्रवर्तनात् ।
नरो निरयमाप्नोति रौरवं रोमसङ्ख्यया ॥
कृष्णमन्त्रं जपेद्भक्त्या श्रीरामं सम्यगब्जज ।
तस्य मृत्युभयं नास्ति तस्य मोक्षश्च लभ्यते ॥

इति शेषसंहितायां षड्विंशोध्यायः.

## लक्ष्मीनृसिंहबीजम्

शेषः—

लक्ष्मीनृसिंहबीजं तु वासुदेवाख्यबीजकम् ।
भूवराहं तथा वक्ष्ये न्यासध्यानादिपूर्वकम् ॥
ब्रह्म शान्तं विषयुतं वह्निवायुसमन्वितम् ।
जतुर्दशस्वरेणाभियुक्तं वह्निसमप्रभम् ॥
षष्ठस्वरेण संयुक्तं संयुक्तं बिन्दुनादितम् ।
लक्ष्मीनृहरिबीजं स्यात् सर्वसिद्धिप्रदायकम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता श्रीनृसिंहश्च क्षं बीजं शक्तिरौं तथा ॥
श्रीं कीलकं ऐं कवचं क्ष्रीं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादींस्तद्वदब्जज ॥
सर्वाभरणभूषाङ्गं त्रिणेत्रं सौम्यविग्रहम् ।
श्रीभूनीलाधिपं देवं नारसिंहमुपास्महे ॥
चातुरङ्गफलं सर्वं गोपालैकाक्षरस्यवत् ।

## वासुदेवबीजम्

प्रणवान्तं समुद्धृत्य बिन्दुनादसमान्वितम् ।
वासुदेवमिदं बीजं सर्वसिद्धिकरं नृणाम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता वासुदेवश्च ओं बीजं शक्तिश्री तथा ॥
ह्रीं कीलकं एं कवचं क्लीं अस्त्रं श्वेतरक्तकम् ।
न्यासध्यानादिकं सर्वं पूर्वोक्तप्रणवेयथा ॥

आदौ मूर्ध्नि समुद्धृत्य अग्निवृत्तसमन्वितम् ।
तथा मायां समुद्धृत्य अग्निना सह योजयेत् ॥
तद्वत्तद्वामकर्णेन अग्निमुद्धृत्य पूर्ववत् ।
तद्वदूर्ध्वोष्ठसंयुक्तं यान्तं सम्यक् तथाऽब्जज ॥
द्वादशस्वरमुद्धृत्य तद्वदेवसमन्वितम् ।
पञ्चावस्थाकरास्सम्यक् पञ्चबाणास्स्मरस्य तु ॥
एतानि पञ्चबीजानि महानन्दकराण्यथ ।
यद्वायग्न्यादि मन्त्राणां तत्तत्कर्मसु मन्त्रवित् ॥
पञ्चावस्थाप्रसिद्ध्यर्थं योजयेत्कमलासन ।
एकारैकारयुक्ताश्च हरिस्मररमास्तथा ॥
वासुदेवमथानन्दाः पञ्चबाणाः सरस्य तु ।
सान्तं यान्तं मयायुक्तं वामकर्णसमन्वितम् ॥

## भूवराहबीजम्.

बिन्दुना भूवराहस्स्यात् सर्वसम्पत्प्रदायकम् ।
ऋषिर्धाताऽस्य मन्त्रस्य जगती छन्द उच्यते ॥
देवता भूवराहश्च हं बीजं शक्तिः ॐ तथा ।
श्रीं कीलकं ह्रीं कवचं ऐं अस्त्रं श्वेतवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादिः पूर्ववद्भवेत् ।
भूवराह महोत्साह सर्वशत्रुविनाशन ॥
शत्रुहिंसां हरन् रक्ष श्रियं दापय देहि मे ।
चातुरङ्गफलं सम्यक् गोपालैकाक्षरं यथा ॥

इति शेषसंहितायां सप्तविंशोध्यायः.

## अनन्तबीजम्

शेषः—

अथ वक्ष्ये विधानेन अनन्तं बीजमुत्तमम् ।
तार्क्ष्यं तु वैष्वक्सेनं च बिष्वक्सेनस्य बीजकम् ॥
वृत्तं तत्तत्समुद्धृत्य बिन्दुनादसमन्वितम् ।
अनन्तबीजमित्युक्तं सर्वाकर्षप्रदायकम् ।
ऋषी रुद्रोऽस्य मन्त्रस्य जगती छन्द एव च ॥
अनन्तो देवता चैव अं बीजं शक्तिः ईं तथा ।
ईं कीलकं यं कवचं अं अस्त्रं श्वेतवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववत्तथा ।
शङ्खचक्रधरं देवं सहस्रवदनं शुभम् ॥
वज्राभरणभूषाङ्गं अनन्तं सततं भजे ।
होमादितत्फलं सम्यक् गोपालैकाक्षरं यथा ॥

## गरुडबीजम्.

लान्तं मायासमायुक्तं बिन्दुनादसमन्वितम् ।
पक्षिराजस्य बीजं स्यात् सर्वसंहारकारकम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
पक्षीन्द्रो देवता चैव क्षं बीजं शक्तिश्श्रीं तथा ॥
रं कीलकं यं कवचं ईं अस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववत्तथा ॥
शङ्खचक्रधरं देवं सर्वाभरणभूषितम् ।
दंष्ट्राकराळमत्युग्रं पक्षिराजं भजाम्यहम् ॥
होमार्चनफलं सर्वं नृसिंहैकाक्षरं यथा ।

## विष्वक्सेनबीजम्.

लान्तं यान्तसमायुक्तं मायाबिन्दुविभूषितम् ।
विष्वक्सेनस्य बीजं स्यात् सर्वसिद्धिप्रदायकम् ॥
ऋषिर्वसिष्ठो मन्त्रस्य त्रिष्टुप्छन्दस्तथैव च ।
विष्वक्सेनो देवता च वं बीजं शक्तिः ईं तथा ॥
यं कीलकं यं कवचं रं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् तद्वदब्जज ॥
शङ्खचक्रधरं देवं वरदाभयधारिणम् ।
सर्वाभरणसंयुक्तं विष्वक्सेनमहं भजे ॥
चातुरङ्गफलं तद्वत् वराहैकाक्षरं यथा ।

## वराहनृसिंहबीजम्.

ब्रह्मयान्तसमायुक्तं ऊर्ध्वदन्तसमन्वितम ॥
बिन्दुनादसमायुक्तं ज्वलिताग्निसमप्रभम् ।
वराहनृहरेः बीजं सर्वाकर्षार्थसिद्धिदम् ।
ऋषिश्शिवोऽस्य मन्त्रस्य गायत्री छन्द उच्यते ॥
देवो वराहनृहरिः अं बीजं शक्तिः ओं तथा ।
क्लीं कीलकं ह्रीं कवचं यं अस्त्रं रक्तवर्णकम् ॥
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्वमन्त्रवत् ।
चक्राष्टकधरं देवं त्रिनेत्रं चोग्रविग्रहम् ॥
विश्वरूपमजं सौम्यं वराहनृहरिं भजे ।
चातुरङ्गफलं तद्वत् नृसिंहैकाक्षरं यथा ॥

इति शेषसंहितायां अष्टाविंशोऽध्यायः.

---

## हनुमद्बीजम्.

शेषः—

सम्यग्वक्ष्ये विधानेन हनुमद्बीजमुत्तमम् ।
अन्नाधिपं कार्तवीर्यं हयग्रीवं नृकेसरिम् ॥
भान्तं यान्तसमायुक्तं हालाहलसमप्रभम् ।
मर्कटेशस्य बीजं स्यात् सर्वसंहारकारकम् ॥
ऋषी रुद्रोऽस्य मन्त्रस्य जगती छन्द उच्यते ।
देवता मर्कटेशश्च स्यं बीजं शक्तिः यं तथा ॥
लं कीलकं यं कवचं रं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववत्तथा ॥
दंष्ट्राकराळमत्युग्रं पिङ्गाक्षं मुष्टिधारिणम् ।
उदाराङ्गं त्रिनेत्रं तं वन्दे लङ्काभयकरम् ॥
चातुरङ्गफलं सम्यक् वामनैकाक्षरादिवत् ।

## अन्नाधिपबीजम्.

तान्तं बिन्दुसमायुक्तं अन्नाधिपतिबीजकम् ।
अन्नाभिवृद्धिदं सौम्यं भवेत्सर्वाभिवृद्धिदम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
अन्नाधिपो देवता च तं बीजं शक्तिवं तथा ॥
यं कीलकं यं कवचं वं अस्त्रं श्वेतवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववत्तथा ॥
शङ्खचक्रधरं सौम्यं अमृताभयधारिणम् ।
मुक्ताभरणभूषाङ्गं भजे अन्नाधिपं हरिम् ॥

### कार्तवीर्यबीजम्.

कान्तं यान्तसमायुक्तं कालाग्निसदृशप्रभम् ।
वामकर्णसमायुक्तं कार्तवीर्यं भवेत् शुभम् ॥
ऋषिश्शिवोऽस्य मन्त्रस्य जगती छन्द उच्यते ।
कार्तवीर्यो देवता च आं बीजं शक्तिः ईं तथा ॥
लं कीलकं यं कवचं रं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यं पूर्ववदब्जज ॥
रक्ताभरणभूषाङ्गं सहस्रायुधधारिणम् ।
तेजोमयमुदाराङ्गं कार्तवीर्यमहं भजे ॥
पौरश्चरणहोमादीन् श्रीकूर्मैकाक्षरं यथा ।

### हयग्रीवनृसिंहबीजम्.

वान्तन्तु प्रणवान्तश्च बिन्दुनादसमन्वितम् ॥
हयग्रीवनृसिंहाख्यं भवेद्विद्याप्रदायकम् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ॥
हयग्रीवनृसिंहाख्यो देवता सम्यगब्जज ।
सं बीजं च तु रीं शक्तिः कीलकं लं तथा भवेत् ॥
श्रीं ह्रीं कवचं रं चास्त्रं श्वेतवर्णं विभुं स्मरेत् ।
षडङ्गं षट्स्वरैर्न्यस्य व्याप्यादीन् पूर्ववत्तथा ॥
सर्वाभरणभूषाङ्गं सच्चिदानन्दविग्रहम् ।
पद्मचक्रधरं वन्दे हयग्रीवनृकेसरिम् ॥
जपहोमादिकं सर्वं श्रीरामैकाक्षरं यथा ।
एकाक्षरप्रयोगं तु यन्त्रतन्त्रादिसंयुतम् ॥

धर्मसंस्थापनार्थाय लोकसंरक्षणाय च ।
वक्ष्येऽथ सुलभोपायं देवर्षीणां च दुर्लभम् ॥
मोक्षोपायकरं तद्वत् सृष्टिस्थित्यन्तकारकम् ।
यतीनां च गृहस्थानां अदृष्टार्थं विधीयते ॥
पञ्चाशद्वर्णरूपेण नरयन्त्रं प्रकल्पयेत् ।
तन्मूर्ध्नि नेत्रवक्त्रे च कर्णे हृदि स मन्त्रवित् ॥
नाभौ गुह्ये पादयोश्च तत्तदेकाक्षरं लिखेत् ।
वाय्वग्निबीजयोस्सार्धमेतं कुरुकुरुष्विति ॥
तद्बहिर्वेष्टयेत्पश्चात् तद्बहिर्विलिखेद्बुधः ।
अकारादिक्षकारान्तं तद्बहिः कर्ममण्डलम् ॥
वश्याकृष्ये मोहने च एतद्यन्त्रं समुद्धरेत् ।
जपेद्यन्त्रोपरि ब्रह्मन् तत्तद्द्रव्येण होमयेत् ॥
विषामृतानि संयोज्य अष्टषट्चतुरेव च ।
सापत्नये देवतास्सर्वा मान्त्रिकस्य गृहे सदा ॥
किङ्करा इव तिष्ठन्ति देवाद्याः कमलासन ।
गुह्याद्गुह्यतमं यन्त्रं सर्वदा गोपनीयकम् ॥
मायया च श्रिया चैव मान्मथेनैव मन्त्रवित् ।
षट्कोणं च क्रमाल्लिख्य प्रागादिषु यथाक्रमम् ॥
श्रीरामैकाक्षरं लिख्य अग्रे सन्धिषु तल्लिखेत् ।
कर्णिकायां लिखेत् बीजं तद्बहिः साध्यनाम च ॥
हयग्रीवेण वा कुर्यात् पक्षिराजादिबीजकैः ।
तस्मात्सर्वप्रयत्नेन एतत्कर्म समाचरेत् ॥

पञ्चलक्षं जपेद्भक्त्या अङ्गहीने शुचिस्स्मरन् ।
षट्कोणं चक्रमालिख्य प्रागादिषु यथाक्रमम् ॥
श्रीरामैकाक्षरं लिख्य अग्रे सन्धिषु तल्लिखेत् ।
कर्णिकायां लिखेद्बीजं तद्बहिः साध्यनाम च ॥
एवं कुरुकुरुष्वेति तत्तत्कर्मोक्तमार्गतः ।
कोणाद्बहिर्लिखेन्मन्त्री साध्यपूर्ववदग्निना ॥
पाशाङ्कुशेन संवेष्ट्य तद्बीजेनैव वेष्टयेत् ।
एतद्गुह्यतमं यन्त्रं सम्यक्शीघ्रफलप्रदम् ॥
यन्त्रोपरि तथा ब्रह्मन् कुर्यात्तर्पणहोमकान् ।
चातुरङ्गविधानेन शीघ्रं सिद्धिमवाप्नुयात् ॥
एतद्यन्त्रविधानेन तत्तद्बीजाक्षरैस्सह ।
अभ्यस्य क्रियते चैव तत्तत्फलमवाप्नुयात् ॥
तत्तत्पक्षान्तरं वक्ष्ये कोणाग्रे सन्धिषु क्रमात् ।
रामं नृसिंहं हनुमद्देवमेकाक्षरान् क्रमात् ॥
विलिख्य पूर्ववत्साध्यं वेष्टनं पूर्ववद्भवेत् ।
एकेनैव प्रकारेण मायाश्रीमान्मथैर्लिभेत् ॥
यद्बीजेन लभेद्यन्त्रं तद्बीजफलमाप्नुयात् ।
बीजमन्त्रप्रभावं यत् वक्तुं शक्यं न चेदिह ॥
तस्मात्सर्वविधानेन बीजमन्त्रं जपेत्सदा ।
तन्मान्त्रिकस्य दासस्य क्रियते वाञ्छितं तु यत् ॥
तस्य मुक्तिं प्रदास्यामि तद्बीजादिप्रभावतः ।
स्तम्भनादौ यथा ब्रह्मन् शकटं यन्त्रमुद्धरेत् ॥

चतुर्वृत्तं कर्णिकावत् चतुर्दिक्षु लभेद्बुध ।
तत्सन्धौ विलिखेत्तद्वत् पूर्वोक्तेनैव संलिखेत् ॥
क्रूरे क्रूरान् समायोज्य सौम्ये सौम्यान् लिखेत्तथा ।
ध्यानमण्डलभेदज्ञः कुर्यादेतत्क्रियां शुचिः ॥
पौरश्चरणकं कृत्वा मन्त्रवित्तु चतुर्मुख ।
बीजान् साध्यं पल्लवांश्च ज्ञात्वा मन्त्रं प्रयोजयेत् ॥

इति शेषसंहितायां एकोनत्रिंशोऽध्यायः.

---

## सुदर्शननृसिंहयन्त्रः.

शेषः—

श‍ृणु वक्ष्यामि सर्वेषां अष्टैश्वर्यशुभावहम् ।
सर्वग्रहविनाशं च सर्वापस्मारनाशनम् ॥
सर्वशक्तिकरं पुण्यं पुत्रपौत्रप्रवर्तनम् ।
सर्वशत्रुविनाशं च सर्वघोरनिवारणम् ॥
क्षुद्रयन्त्रादितन्त्रादिपरविद्याविनाशनम् ।
परसेनाविनाशं च स्वसेनारक्षणं तथा ॥
सुदर्शननृसिंहस्य यन्त्राद्यैर्विजयो भवेत् ।
ग्रामे वा नगरे वापि पट्टणे वा विशेषतः ॥
देवालये गृहे सम्यक् कपोतपातादिदर्शने ।
अपमृत्यौ सुसंप्राप्ते दुर्भिक्षे युद्धसङ्कमे ॥
विदिक्षु च चतुर्दिक्षु मन्त्रवित् सम्यगब्जज ।
सुदर्शननृसिंहस्य यन्त्रमुद्धार्य देशिकः ॥

स्थापयेत्तच्चतुर्दिक्षु चातुरङ्गप्रयुक्तिभिः ।
विदिक्षु स्थापयेत्तद्वत् नारसिंहसुदर्शनम् ॥
यन्त्रमुद्धार्य सन्मन्त्री जपशीलैस्सहाब्जज ।
मिताहाररतैश्शान्तैः काम्यकर्मादिवर्जितैः ॥
जितेन्द्रियरतैश्शुद्धैः मितभाषारतैर्द्विजैः ।
सदाचाररतैस्सम्यक् ऋत्विग्भिर्वैष्णवैरिदम् ॥
एतत्सर्वगुणोपेतऋत्विग्भिस्सह कारयेत् ।
मन्त्रविद्विधिना ब्रह्मन् ऋषिगुर्वाज्ञया मम ॥
धर्मसंस्थापनार्थाय लोकसंरक्षणाय च ।
धार्मिको वा नृपो वाऽथ धनाढ्यो वा सुमन्त्रवित् ॥
मन्त्री वाऽथ गृहस्थो वा यन्त्रस्थापनमाचरेत् ।
ग्रामस्य मध्यमे सम्यक् मण्टपोक्तविधानतः ॥
मण्डपं कारयेन्मन्त्री तद्ग्रामे चाष्टदिक्षु च ।
सर्वेषां हितकामानां चतुरश्रं प्रशस्यते ॥
योन्याकारं त्रिकोणञ्च धनुः कुण्डं तथैवच ।
षडश्रं तु सुपञ्चाश्रं पद्माकारमतःपरम् ॥
अष्टाश्रं वर्तुलं चैव कुर्यात्कुण्डानि तत्क्रमात् ।
इन्द्रादीशानपर्यन्तं दिग्भागं क्रमयेद्बुधः ।
मण्डले मध्यमे देशे वेदिं कुर्याद्विधानतः ॥
त्रिमेखलानि सर्वाणि हस्तमात्रप्रमाणतः ।
अष्टहस्तं ततष्षट्कं चतुष्कं हस्तमेव वा ॥
अरत्निकं स्थण्डिलं च कुण्डनिर्माणलक्षणम् ।
अष्टहस्तात्परं नास्ति ह्रस्वं नास्तीत्यरत्निकात् ॥

यावत्प्रमाणकुण्डानि तावदायामविस्तृतम् ।
निखातं च समं कुर्यात् गदाकारन्तु मेखलम् ।
नाभिं न कारयेत्पद्मे योनिं योनौ न कारयेत् ॥

इन्द्रादीशानपर्यन्तं तत्कुण्डानि यथाविधि ।
कोटिलक्षायुतं चैव सहस्रं वा यथाविधि ॥

यजमानबलं ज्ञात्वा मध्यमं वाऽथ कारयेत् ।
नगरे कोटिहोमं च पट्टणे लक्षहोमकम् ॥

देवालये तु ह्ययुतं ग्रामे साहस्रकं विधिः ।
क्षुद्रग्रामे शतं कुर्यात् यजमानबलेन वा ॥

अग्नेश्च वर्णजिह्वादीन् ज्ञात्वा होमं समाचरेत् ।
मण्डपे मध्यमे देशे वेदिकां कारयेद्बुधः ॥

मण्टपं वेदिकां सम्यक् गोमयेनोपलिप्य च ।
प्राङ्मुखोदङ्मुखो भूत्वा आसीनस्सुसमाहितः ॥

अक्षतैस्सम्यगुच्चार्य कूर्माद्यासनमन्त्रकान् ।
मन्त्री सदासने स्थित्वा प्रोक्षयेच्छुद्धवारिणा ॥

स्वगुरुं तद्गुरुं नत्वा गुरून् सर्वान् तथैव च ।
पृथिव्यै नम इत्युक्तं गुरुवन्दनपूर्वकम् ॥

अतितीव्र महाकाय कल्पान्तदहनोपम ।
श्रीनृसिंह नमस्तुभ्यं अनुज्ञां दातुमर्हसि ॥

ईशानदेशे संस्थाप्यः दूर्वासा नारदस्तथा ।
मन्त्रं मन्त्रेश्वरं नत्वा ऋषिकल्पान् तथैव च ॥

स्थण्डिलं नवधान्यैश्च कुर्यादर्चां फलादिकैः ।

षोडशाङ्गुलमानेन ताम्रयन्त्रं समुद्धरेत् ।
पञ्चयन्त्राणि कुर्वीत नारसिंहसुदर्शनम् ।
उपयन्त्राणि कुर्वीत नृसिंहैकाक्षरं शुचिः ॥

शुभनक्षत्रयोगादौ एकान्ते मण्डपे गुरुः ।
पूर्वमुद्धार्य यन्त्राणि मन्त्रवित्साधकोत्तमः ॥

प्राणप्रतिष्ठां कुर्वीत यन्त्रस्योक्तविधानतः ।
नवाहं वाऽथ सप्ताहं त्रिदिनं वा विशेषतः ॥

पूर्वादिमण्टपे स्थाप्य वेदिकोपरि मन्त्रवित् ।
सम्यक् कुम्भानि संस्थाप्य कलशैर्नवसङ्ख्यया ॥

प्रथमं ग्राममध्ये तु पश्चात् ग्रामादिकं क्रमात् ।
कुम्भस्योक्तविधानेन अन्नाद्यैः प्रतिमादिभिः ॥

कुम्भानि स्थापयेत् पश्चात् यन्त्रान् संपूज्य मन्त्रवित् ।
तत्तद्यन्त्रोक्तमार्गेण कुम्भमन्त्रैस्तथाऽब्जज ॥

षोडशैरुपचारैश्च कुम्भयन्त्राणि पूजयेत् ।
ऋत्विजः कल्पयेन्मन्त्री षोडशाथ तदर्धकम् ॥

स्वयमेव प्रकुर्वीत सम्यक् साहस्रहोमकम् ।
वेदपारायणैः स्तोत्रैः पुराणाद्यैश्च वैष्णवैः ॥

भाषागानैर्महावाद्यै रुपजप्यैस्सहाऽब्जज ।
मध्यमं पूर्वमारभ्य पूर्वादौ क्रमशश्शुचिः ॥

आवाहनादिमन्त्रेण चक्रराजेन मन्त्रवित् ।
क्षुद्रभूतग्रहव्याधीन् प्रेतादीन् ब्रह्मराक्षसान् ॥

महोत्पातादिकान् सम्यक् सर्वरोगं तथाज्वरीन् ।

क्षुद्रशल्यादितन्त्रादीन् नाळिकेरफलेषु च ।
आवाह्य मन्त्रविद्ब्रह्मन् नाळिकेरान् घटे क्षिपेत् ।
तद्धटं तु महानद्यां समुद्रे वा खनेद्बुधः ॥
मम नामेतिमन्त्रेण नारसिंहसुदर्शनैः ।
रक्षोहणेति मन्त्रेण कृणुष्वेति च मन्त्रयेत् ॥
समुद्रं गच्छेति मन्त्रेण आयुषः प्राणसंयुतम् ।
स्वसीमोल्लङ्घनं कृत्वा तद्धटं राहुमन्त्रकैः ॥
पश्चात् स्नानं प्रकुर्वीत मन्त्रविद्भिः द्विजैस्सह ।
ऊर्ध्वपुण्ड्रादिकं धृत्वा मध्यमण्टपमाविशेत् ॥
परमन्त्रग्रासकेण चक्रराजेन चिन्तयेत् ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
पूर्वादीशानपर्यन्तं एवं कुर्यात्सुमन्त्रवित् ।
तदात्मरक्षां मन्त्रेण पूर्वोक्तेनैव कारयेत् ॥
तन्मण्डपेषु सन्मन्त्री तत्तद्यन्त्रोक्तमन्त्रकैः ।
बिम्बे कुम्भे च यन्त्रे च षोडशैरुपचारकैः ॥
पूजयित्वा सहस्रारं ध्यानमण्डलभेदतः ।
शान्तिकर्म करिष्येति पुरस्सङ्कल्प्य देशिकः ॥
उपजप्यादिकं सम्यक् वेदादीन् कल्पयेद्गुरुः ।
रामकृष्णवराहादीन् नारसिंहसुदर्शनौ ॥
हनुमद्गरुडौ ब्रह्मन् उपजप्याः प्रकीर्तिताः ।
विष्णुं नारायणं चैव वासुदेवं नवग्रहान् ॥
तद्वत्तु पौरुषं सूक्तं श्रीभूसूक्तं तथैव च ।

नामत्रयं च गायत्रीं अङ्गमन्त्राणि कल्पयेत् ।
सर्वेषां कल्पयेद्ब्रह्मन् कृष्णाजिनकुशासनम् ।
आचार्यः प्रारभेत्पूर्वं पश्चादृत्विज एव च ॥

कर्मसाधनकालं यत् वाग्यतो नियतश्शुचिः ।
तद्भावभावितो मन्त्री मुद्राबन्धञ्च कारयेत् ॥

चक्रमुद्रां च शङ्खं च पाशाङ्कुशमसिं गदाम् ।
इषुमस्त्रं च योनिं च यावत्कर्मावसानकम् ॥

पुरस्तात्तन्त्रमारभ्य स्वसूत्रेणोक्तमार्गतः ।
मन्त्रोक्तविधिना चैव वह्निसंस्कारमेव च ॥

न्यासं कृत्वा विधानेन पश्चाद्धोमं समाचरेत् ।
जपतर्पणहोमं च पुष्पाञ्जलिसमं भवेत् ॥

तन्मण्टपसमीपेषु वैष्णवान् भोजयेद्द्विजान् ।
तिलमिश्रविचित्रान्नैः ग्रामस्थास्सम्यगब्जज ॥

उत्सवान्नन्तु भुञ्जीरन् अष्टदिक्षु वनेषु च ।
प्रथमे बिल्वकाष्ठं स्यात् द्वितीये ब्रह्मवृक्षकभू ॥

अक्षकाष्ठं तृतीये च चतुर्थे खादिरं तथा ।
अपामार्गं पञ्चमे तु षष्ठ्यां औदम्बरीं तथा ॥

शर्करातिलसंपिष्टैः नाळिकेरैस्तु सप्तमे ।
अष्टमे पायसं चैव मन्त्रवित् नवमे तिलैः ॥

सुदर्शननृसिंहस्य मन्त्रेणैव हुनेद्बुधः ।
नारसिंहसुदर्शेन अङ्गमन्त्रैरुपाङ्गकैः ॥

प्रत्येकं जुहुयाद्ब्रह्मन् अष्टाविंशति संख्यया ।

नवरत्नैर्हेमपुष्टे शुद्धपुष्टैस्समर्चकैः ।
उपमन्त्रैरङ्गमन्त्रैः यन्त्रं मन्त्रेण चार्चयत् ।
पौष्टिकं पथमं प्रोक्तं पश्चाच्छान्तिकमेव च ॥

पायसान्नं गुडान्नं च मुद्गान्नं शुद्धमोदनम् ।
दधिक्षीराज्यसम्पन्नं नानापूपफलान्वितम् ॥

नैवेद्यं चक्रराजस्य रक्षरक्षेत्यनन्तरम ।
तत्कर्मशान्तिकं कुर्यात् आचार्यश्च ममेति च ॥

जपतर्पणहोमं च पृथक् पुष्पांजलिः पृथक् ।
यन्त्रं यन्त्रं सहस्रं वा चातुरङ्गं चरेद्बुधः ॥

इत्येवं जपहोमैश्च तर्पणार्चनभोजनैः ।
सर्वपापविनिर्मुक्तः सर्वान् कामान् अवापुयात् ॥

सर्वरोगविनाशं च सर्वारोग्यशुभं भवेत् ।
सर्वोत्पातादिनाशश्च सर्वं यन्त्रेण सिध्यति ॥

यन्त्रेणैव सुसिद्धिः स्यात् यन्त्ररूपमिदं जगत् ।
सुदर्शननृसिंहस्य शान्तिहोमं च कारयेत् ॥

होमेन षट्कं लभते होमात् यत्सर्वमिच्छ तत् ।
होमेनसर्वं लभते होमो लोकान् परान्नयेत् ॥

होमेन देवतातृप्तिः होमे सर्वं प्रतिष्ठितम् ।
सर्वदेवमयो ह्यग्निः अग्नेस्साहस्रमावृतम् ॥

सहस्रारो नेमिसंज्ञः प्रत्यक्षं श्रूयते श्रुतिः ।
कर्मावसाने नैवेद्यं विष्णुभूतमनन्तरम् ॥

देवीनां परिवाराणां तत्तन्नामानि होमयेत् ।

प्रधानाग्नौ हुनेद्विद्वान् एकैकं च पृथक् पृथक् ।
भूतवैष्णवतृप्त्यर्थं बलिदानं दिने दिने ॥

महालक्ष्मीबलिं चैव त्रिसन्ध्यं कारयेद्बुधः ।
ओंनमो भगवते चैव विष्णुभूतमनन्तरम् ॥

सुदर्शननृसिंहाय सर्वरक्षाकराय च ।
परिवारपतेश्चैव देवस्य च बलिं ददौ ॥

माषपायसकूश्माण्डदधिमध्वाज्यसंयुतम् ।
फलमोदकसंयुक्तं बलिमन्त्रं वदेत्पुनः ॥

ओन्नमो भगवते विष्णुमहामायेति पदं वदेत् ।
सर्वश्रीभूतशक्त्याधिपतये षट्कोणान्तरवार्तिने ॥

सुदर्शननृसिंहाय ओन्नमो भगवते बलिं ददामि ।
स्वाहान्तेन पुना रात्रौ बलीन् दद्यात् विचक्षणः ॥

उत्सवान्तदिने सम्यक् पञ्चगव्यविधानतः ।
पञ्चगव्यप्रतिष्ठां च कुर्यात् सम्यक् सुमन्त्रवित् ॥

तद्यन्त्रसंङ्ख्या चैव क्रमात् मृत्कलशेषु च ।
तद्गव्यन्तु सुसम्पूज्य पञ्चगव्योक्तमार्गतः ॥

यन्त्रेण कलशं ब्रह्मन् निखनेन्मन्त्रवित्तमः ।
प्रथमं ग्राममध्ये तु पूर्वादिक्रमयोगतः ॥

तत्तद्यन्त्रोक्तमार्गेण निखनेन्मङ्गलादिभिः ।
तद्गव्यशेषं सर्वेषां दद्यान्मन्त्रेण मन्त्रवित् ॥

समाप्योत्तरकर्मादीन् षोडशैरुपचारकैः ।
देवं सम्पूजयेत्पश्चात् देवमुद्वास्य कुम्भगम् ॥

यन्त्रकर्ता शुचिर्भूत्वा प्राङ्मुखस्स्वसमीपके ।
तस्य मङ्गलशब्दैश्च ब्राह्मणैः स्वस्तिवाचकैः ॥
आचार्यश्चक्रगायत्रीं स्मृत्वा मन्त्राभिषेचयेत् ।
अन्यत्र वस्त्रैराच्छाद्य मन्त्रदानं तथा गुरुः ॥
तच्छेषेणच सन्मन्त्री सर्वेषां प्रोक्षणं तथा ।
गृहदेवालयाद्यांश्च प्रोक्षणेषु विधीयते ॥
एतत्कर्मकृतेनैव सर्वसिद्धिमवाप्नुयात् ।
गृहे देवालये ग्रामे पट्टणे राजमन्दिरे ॥
अशनेः पतने सद्यः एतत्कर्म समाचरेत् ।
ब्रह्मविट्क्षत्रशूद्राणां तथादेशाधिवासिनाम् ॥
अपमृत्यौ सुसम्प्राप्ते महारोगादिसम्भवे ।
चातुर्ग्रहादियोगादौ स्वनक्षत्रादिराशिषु ॥
सूर्यादिग्रहणे प्राप्ते संग्रामादेश्च सम्भवे ।
स्वगृहे तु स्वदेहे वा वेतालाद्यादिसम्भवे ॥
एककुण्डविधानेन पूर्वोक्तैर्मन्त्रतन्त्रकैः ।
एकयन्त्रविधानेन कुम्भं तद्वच्चतुर्मुख ॥
गुरुरेव प्रकुर्वीत मन्त्रतन्त्रादिसंयुतम् ।
तन्नक्षत्रे समारभ्य कुर्यान्मण्डलमेव वा ॥
तदर्धं तु तदर्धं वा त्रिदिनं वा सुमन्त्रवित् ।
पातकादौ दिनं तद्वत् तद्दिने ग्रहणादिषु ॥
उपद्रवादिकं ज्ञात्वा कुर्यादेतच्चतुर्मुख ।
स्वगृहे स्वस्य वा तद्वत् महोत्पादिदर्शने ॥

वन्यसत्वप्रवेशे तु दुस्स्वप्नादिनिदर्शने ।
पूर्वोक्तमेव तत्कुर्यात् जीवेद्यद्बुद्धिमांस्तथा ॥
सद्यः शान्तिं न कुर्याच्चेत् मृतत्वं तु स गच्छति ।
पुत्रपौत्रादिकं वापि तस्य वंशक्षयो भवेत् ॥
एतत्कार्मकृतेनैव सर्वसिद्धिं लभेत्पुनः ।
एतस्य सदृशं कर्म नास्ति सत्यं चतुर्मुख ॥
स एव मृत्युं तीर्त्वा तु सर्वान् कामानवाप्नुयात् ।
यन्त्रमन्त्रादिहोमश्च यत्र विद्याऽधितिष्ठति ॥
तद्देशं मङ्गलं पुण्यं मन्त्रविद्याऽधितिष्ठति ।
धनधान्यगवां चैव अष्टैश्वर्यादिकं सदा ॥
दुर्वृत्तदुःखदुर्व्याधिः न च दुर्भिक्षतस्कराः ।
सुवृष्टिं लभते देशः पूर्णसस्या वसुन्धरा ॥
दीर्घायुषस्तथा मर्त्याः यथा कृतयुगे तथा ।
तस्मात्सर्वप्रयत्नेन चक्रराजं समर्चयेत् ॥
दैविकं मानुषं चैव चातुरङ्गमिहोच्यते ।
दैविकं मान्त्रिकं चैव मानुषं भूपतेर्भवेत् ॥
दैविकं मानुषं युंज्यात् शापादपि शरादपि ।
जपहोमार्चनपरः आचार्यो मन्त्रविद्भवेत् ॥
तद्यन्त्रकर्ता भक्त्याद्यैराचार्यं पूजयेत्ततः ।
मुक्ताहारविचित्राद्यैः कटकैरङ्गुलीयकैः ॥
दुकूलपट्टवस्त्राद्यैः महाशब्दैश्च मण्टमे ।
तं मान्त्रिकं तु संपूज्य दद्याद्देशं सधान्यकम् ॥

ग्रामं वाऽथ महद्द्यात् शिबिकान्दोळिकादिकम् ।
छत्रचामरसंयुक्तं दद्यात्स्वर्णायुतं तु वा ॥
सहस्रं वा तदर्धं वा प्रयोज्याद्यैस्समर्चयेत् ।
ऋत्विग्भिः क्षेत्रदानं च सुक्षेत्रं धान्यसंकुलम् ॥
स्वर्णयज्ञोपवीतैश्च कुण्डलैः रत्नभूषणैः ।
दुकूलैः क्षौमवस्त्रैश्च कार्पासपटसूक्ष्मकैः ॥
दद्यात्सुवर्णं ऋत्विग्भ्यः शतं वा दश वा भवेत् ।
आचार्यमृत्विजं चैव पूजयित्वा ततःपरम् ॥
आवभृथ्योक्तविधिना वैष्णवान् भोजयेत्ततः ।
तादृशोत्कृष्टकर्मभ्यो द्विजातिभ्योऽपि दक्षिणाम् ॥
इह कर्म प्रयोक्तव्यं नृपाणां च विशेषतः ।
पठतां शृण्वतां चैव चक्रराजप्रभावकम् ॥
सर्वपापविनिर्मुक्तः स याति परमं पदम् ।

## यन्त्ररूपम्.

अतः परं प्रवक्ष्यामि यन्त्ररूपमनुत्तमम् ॥
सुदर्शननृसिंहस्य विधानं सम्यगब्जज ।
मध्ये चैकाक्षरं लिख्य परितस्साध्यमालिखेत् ॥
रक्षरक्षेति संयोज्य ओमित्येकाक्षरं भवेत् ।
षट्कोणं तद्बहिर्लिख्य सहस्रारेति हुंफट् ॥
षट्कोणे विलिखेत्सन्धौ ओन्नमोविष्णवेति च ।
प्रणवेन सुसंवेष्ट्य तद्बहिर्मन्त्रविच्छुचिः ॥

लिखेदष्टदलं पद्मं ॐनमो नारायणाय ।
दले लिखेत्ततस्सन्धौ ओं जयजय नृसिंह ॥
लिखेच्छ्रिया सुसंवेष्ट्य तद्बहिः द्वादशं दलम् ।
लिखेद्दले ओंनम इति भगवतेति पदं ततः ॥
वासुदेवायेति मनुं लिखेत्सन्धौ तथाऽब्जज ।
ज्वलज्वलेति च ततो ज्वालाचक्राय तेति च ॥
स्वाहामनुं लिखेन्मन्त्री मायाबीजेन वेष्टयेत् ।
तद्बहिष्षोडशदलं दलेषु विलिखेत्स्वरान् ॥
तारतारानुतारांश्च महामायां रमामपि ।
कामराजं नृसिंहं च महाचक्राय मन्त्रवित् ॥
हुंफट्स्वाहेति च मनुं तत्सन्धौ विलिखेत् क्रमात् ।
कामबीजेन संवेष्ट्य पूर्वादिक्रमतो लिखेत् ॥
तद्बहिः पञ्चविंशं च दलं लिख्य दलेषु च ।
ओं सहस्रारेति च ततो ज्वालावर्तिनेति च ॥
क्ष्रौं क्ष्रौं द्रेमित्युक्त्वा ज्वलज्वलपदं ततः ।
हनहन हुंफट् स्वाहा मनुं तद्विलिखेत्ततः ॥
सन्धौ क्ष्रौं सह गायत्रीं लिखेत् क्ष्रौमित्यनेन च ।
वेष्टयेत्तद्बहिः ब्रह्मन् द्वात्रिंशद्दलमालिखेत् ॥
दलेषु विलिखेन्मन्त्री नृसिंहानुष्टुभं ततः ।
सौदर्शनानुष्टुभं च तत्सन्धौ विलिखेद्बुधः ॥
तद्बहिः परितस्सम्यक् व्यञ्जनानि लिखेद्बुधः ।
हंसहंसेति रक्षेति परितस्साध्यसंयुतम् ॥

पाशाङ्कुशेन संवेष्ट्य लिखेदिन्द्रादिबीजकान् ।
सुदर्शननृसिंहस्य यन्त्रमेतच्चतुर्मुख ॥

## नृसिंहयन्त्रः.

नृसिंहचक्रराजस्य यन्त्रमुद्धारयेत्ततः ।
षट्कोणं चक्रमालिख्य तन्मध्ये विलिखेद्बुधः ॥
क्ष्रौमित्येकाक्षरं सम्यक् परितस्साध्यमालिखेत् ।
रक्षरक्षेति संलिख्य कोणेषु विलिखेत्ततः ॥
क्ष्रौं नृसिंहेतिमदं हुंफट्चेति ततो मनुम् ।
ओंनमो विष्णवे सन्धौ लिखेत्तद्वेष्टयेत् श्रिया ॥
तद्बहिर्विलिखेन्मन्त्री अष्टकोणमतन्द्रितः ।
कोणेषु विलिखेन्मन्त्री ओंजयजयनृसिंहेति ॥
ओंनमोनारायणाय सन्धौ मन्त्रं लिखेद्गुरुः ।
प्रणवेन सुसंवेष्ट्य तद्बहिर्विलिखेदिदम् ॥
कोणं द्वादशसङ्ख्येन कोणेषु विलिखेन्मनुम् ।
क्ष्रौं ज्वलज्वलेतिपदं ज्वालावक्त्राय स्वाहेति च ॥
ओंनमो भगवतेति पदं वासुदेवाय सन्धिषु ।
लिखेत्तन्माययाऽऽवेष्ट्य तद्बाहिर्विलिखेद्बुधः ॥
षोडशं दलमित्येव दलेषु विलिखेत्स्वरान् ।
तारतारानुतारांश्च महामायां रमामपि ॥
कामराजं नृसिंहं च ज्वालाचक्राय हुं ततः ।
फट्स्वाहान्तं समालिख्य सन्धौ सम्यग्विचक्षणः ॥

रामबीजेन संवेष्ट्य तद्बहिर्विलिखेत् गुरुः ।
पञ्चविंशद्दलान्लिख्य दलेषु विलिखेन्मनुम् ॥
ओं ज्वलज्वल क्ष्रौंक्ष्रौमिति तज्ज्वालानारसिंह च ॥
सहस्रारहनहनेति हुंफट्स्वाहां ततःपरम् ।
तत्सन्धौ विलिखेदों च गायत्रीं सम्यगब्जज ॥
क्ष्रौंकारेण तथाऽऽवेष्ट्य तद्बहिर्विलिखेत्क्रमात् ।
द्वात्रिंशद्दलसङ्ख्येन दलेषु परितो बुधः ॥
नृसिंहानुष्टुभं लिख्य सन्धौ सौदर्शनं तथा ।
रामबीजेन संवेष्ट्य व्यञ्जनानि बहिर्लिखेत् ॥
पाशाङ्कुशेन संवेष्ट्य हंसहंसेति च क्रमात् ।
रक्षेति संयुतं साध्यं तद्बहिः परितो लिखेत् ॥

## इन्द्रादिबीजानि.

लं रं हं षं तथा वं यं सं शमिन्द्रादि संलिखेत् ।
पूर्वोक्तस्तत्र होमस्स्यात् एतद्यन्त्राणि चोद्धरेत् ॥
पूजायां धारणे चैव सर्वव्याधिनिवारणे ।
एतद्यन्त्राणि कुर्वीत तत्फलं सिध्यति क्षणात् ॥
सर्वपापविनिर्मुक्तः स चिरायुश्च जीवति ।
सम्यक् गुह्यतमं ब्रह्मन् तत्तद्यन्त्रविधानकम् ॥
रहस्यं सर्वशास्त्राणां सर्वदा गोपनीयकम् ।
तस्मात्सर्वप्रयत्नेन मेधावान् भव सर्वदा ॥

## उपयन्त्रम्.

उपयन्त्रं प्रवक्ष्यामि सर्वेषां हितकाम्यया ।
बीजाङ्कं फणपञ्चके प्रविलिखेच्छेषस्य भोगे पुनः

द्वात्रिंशत्पदसंयुतं प्रविलिखेत् तन्नाक्षराणि क्रमात् ।
बीजे नामपदानि साधितमिदं होमेन संपादितं
रोगापस्मृतिदुःखशोकशमने यन्त्रं रिपुध्वंसनम् ।
अभिषेकादिपूजाद्यैः एतद्यन्त्रस्य धारणात् ॥
सर्वेषां सर्वदा सम्यक् अष्टैश्वर्यादिकं तथा ।
कर्तुमकर्तुं सामर्थ्यं अन्यथाकर्तुमब्जज ॥
लभते पौरुषीं सिद्धिं एतदेकाक्षरात्सदा ।
श्रीरामैकाक्षरजपात् नारासिंहात्सुदर्शनात् ॥
एतदेकाक्षराद्यन्त्रात् सर्वसिद्धिं लभेन्नरः ।
यन्त्रपूजाधाणं च कुर्यादेवं स्वयं गुरुः ॥
एककुण्डविधानेन पूर्वादीन् तद्वदब्जज ।
तस्मात्सर्वप्रयत्नेन कुर्यात्साहस्रसंख्यया ॥
किमत्र बहुनोक्तेन कर्तव्यं शान्तिरब्जज ।

इति शेषसंहितायां महाशान्तिविधानं नाम एकत्रिंशोऽध्यायः.

---

## पञ्चगव्यविधिः.

शेषः—

अथ वक्ष्यामि सर्वेषां शुभानां शोभनाक्रियाम् ॥
पञ्चगव्यप्रतिष्ठायां श्रुतः पद्मासन स्वनः ।
वृष्ट्यर्थं चाथ पुष्ट्यर्थं शान्तिकामो विशेतः ॥
श्रीकामो वाऽर्थकामो वा पुत्रकामो विशेषतः ।
वाहननां विशेषे तु गवां नाशे कुलक्षये ॥
मधुसञ्चयने गेहे भित्तिभेदे तथैव च ।
रक्तस्रादर्शने चैव वन्यसत्वप्रवेशने ॥

खद्योते वा गृहे स्थानं प्रतिष्ठाविधिमाचरेत् ।
मध्योद्भवं यशो मृत्युः कीर्तिर्धर्मस्सुखासुखे ॥
आयुरारोग्यमैश्वर्यं मधुदंशपिपीलिकाः ।
एतेषां दोषनाशाय पञ्चगव्यं प्रतिष्ठितम् ॥
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
शुक्रमसीति सर्पिःस्यात् देवस्यत्वा कुशोदकम् ।
ताम्रवर्ण्यास्तु गोर्मूत्रं कृष्णाया गोमयं तथा ॥
श्वेताया गोः पयश्चैव चित्राया दधि चैव हि ।
कपिलाया घृतं ग्राह्यं कुशतोयसमान्वितम् ॥
अढकार्धं तु गोमूत्रं तस्मादर्धं तु गोमयम् ।
तदर्धं तु पयश्चैव तस्मादर्धं तु वै दधि ॥
तदर्धं तु घृतं ग्राह्यं घृततुल्यं कुशोदकम ।
दण्डयेत्ससिधोऽग्रेण कृष्णायैतत्समर्पयेत् ॥
स्पृष्ट्वा पुरुषसूक्तेन जपेत्तस्मिन् समाहितः ।
देवताः संप्रवक्ष्यामि आनुपूर्वेण यस्य या ॥
वरुणो देवता मूत्रे गोमये हव्यवाहनः ।
सोमः क्षीरे दाध्नि वायुः घृते रविरुदाहृतः ॥
आपो हि ष्ठेति चालोक्य उद्यम्य प्रणवेन तु ।
एतेषामाढकं प्रोक्तं शान्तिदं पुष्टिदं भवेत् ॥
अलाभे सर्ववर्णानां ग्राह्यमेतच्छुभं तु वै ।
संयोगक्रम एतेषां मन्त्रैः शक्तिभिरञ्जसा ॥

शुचौ चात्र क्रमेणोक्तं न संयोजनयेच्छुचिः ।
अशेषात् पर्वताच्चैव सितगोश्च विशेषतः ॥
वेदिकायाश्च संग्राह्यं पञ्चमृत्स्नामिदं पुनः ।
पद्मस्य कुमुदस्यैव रक्तकोत्पलकेतकान् ॥
तगरस्य तु मूलानि पत्रमेतत्प्रशस्यते ।
इक्षुशालियवांश्चैव मुद्गमाषक एव च ॥
सिद्धार्थकतिलादीनि धान्यपुञ्जः प्रकीर्तितः ।
बिल्वाम्रश्रीफलानान्तु मातुलङ्गफलादितः ॥
पञ्चपल्लवमाहृत्य शुभपल्लवसंयुतम् ।
मुक्ता शोणमणी कृष्णा पद्मशैलप्रवालकम् ॥
मरतकैवदूर्याद्यै रत्नाद्यैस्सह योजयेत् ।
वास्तुमध्य शुचौ देशे स्वस्ति वाच्य शुभैर्द्विजैः ॥
अङ्गुष्ठं त्रिगुणीकृत्य तत्सूत्रेणैव ताडयेत् ।
प्रसृतिद्विगुणं खात्वा खरं पूज्यं नचोक्ष्य च ॥
तस्य पश्चिमतः पद्मं धान्यतण्डुलशोभितम् ।
तिलैरगरुपर्णैश्च कृत्वा शोभनमर्चयेत् ॥
त्रिविधैर्गन्धपुष्पाद्यैः पद्मकुण्डे समाहितः ।
पद्मोपरि निधायैनं गव्यपूर्णघटं शुभम् ॥
पुण्याहं वाचयित्वाऽथ चक्रमन्त्रैश्च पूजयेत् ।
सावित्र्याऽष्टशतं जप्त्वा स्पृष्ट्वा कुम्भं समाहितः ॥
नारसिंहेन बीजेन प्रणवेन समर्चयेत् ।
यतइन्द्रेति मन्त्रेण शतमष्टात्तरं जपेत् ॥

कयानश्चित्रया चैव पावमान्या त्वनुष्टुभा ।
द्रविणोदा जपेत् बोधे कर्मलिङ्गार्चया सुधीः ॥
यथाविधि जपं कृत्वा प्रार्थयेद्देवमुत्तमम् ।
एवं कृत्वा पञ्चगव्यं वास्तुमन्त्रेण शोभनम् ॥
आममृत्कलशे हृत्वा पञ्चपत्रेण वेष्टयेत् ।
सर्वरत्नैस्समं योज्य प्रणवेन निवेशयेत् ॥
मध्येऽवटस्य तत्कुम्भं परितः परिपूरयेत् ।
पञ्चमृद्भिः शुभैर्धान्यैः पञ्चमूलैश्च मल्लवैः ॥
तत्संवेष्ट्य मृदा सद्यः स्वस्ति वाच्यं ततःपरम् ।
दैवज्ञं पूजयित्वा तु विद्वांसं पूजयेत्ततः ॥
सुमुहूर्ते सुनक्षत्रे शुभयोगे विचक्षणः ।
श्रीकामः पुष्टिकामश्च पुत्रकामश्च कारयेत् ॥
भानुवारे निशादौ तु शान्तिकर्म प्रयोजयेत् ।
आत्मद्रोहे पितृद्रोहे गुरुद्रोहे तथैव च ॥
वाहनानां विनाशे च बन्धुनाशे तथैव च ।
वंशनाशे च संप्राप्ते पुण्यमेतत्समारभेत् ॥
येन पुण्यं कृतं तेन सर्वसिद्धिर्महात्मना ।
सर्वशान्तिमथासाद्य सर्वपुष्टिमवाप्नुयात् ॥
आहवादौ नृपाणां तु कृतं येन नृपेण तु ।
एतेनैव रिपुं जित्वा सर्वक्षोणीं समाप्नुयात् ॥
रक्तस्त्रीदर्शने गेहे वल्मीके वा गृहादिषु ।
भित्तीनां दारणे दृष्टे गृहे मधु भवेद्यदि ॥

वन्यसत्त्वप्रवेशे च तथाऽशनिनिपातने ।
एवमादिभिरन्यैश्च महोत्पातादिसंभवे ॥
अभिभूते गृहे श्येनैः कर्तव्यमिदमग्रजैः ।
दीर्घतीव्रामयग्रस्तो यस्तु कुर्यात्स्वके गृहे ॥
स मुच्यते गृहे रोगैः दीर्घमायुश्च विन्दति ।
अलाभे सर्ववर्णानां यथालाभमथाचरेत् ॥
इत्युक्तं चतुरास्येन पृष्टे नियमपूर्वकम् ।
इक्षुशालियवमुद्गमाषकैः
पद्मशैलतिलमुख्यगव्यकैः ।
पद्मपत्रनिहितं तु भक्षकैः
रागयोगनिहतं श्रियावहम् ॥
करणर्क्षमुहूर्तानां भुजङ्गानां समागमे ।
नाशयोगं वदन्त्यन्ये करणर्क्षं शुभावहम् ॥
वारयोगेऽथवा कुर्यात् नित्ययोगे शुभं फलम् ।
नरनक्षत्रयोगे च शुभे सिद्धिं विनाशयेत् ॥
दैवज्ञं पूजयित्वा तु ब्राह्मणान् पूजयेत्सुधीः ।
अस्मिन् कृते शुभे पुण्ये कर्मणि प्रवरैः जनैः ॥
गृहाधीशेन वा नित्यं वस्तव्यं भूतिमिच्छता ।
भोक्तव्यश्चाप्यधीतव्यः स्तोतव्यश्च दिनेदिने ॥
एतत्पुण्ये कृते येन तेन सिद्धिर्महात्मना ।
प्राप्यन्ते सकलाः कामाः महालक्ष्मीश्च लभ्यते ॥
वर्षेवर्षे शुभे गेहे मन्दिरग्राममध्ययोः ।
राजसन्निधिराष्ट्रे च कृते सर्वसमृद्धिदा ॥

गजाश्वागारमध्ये च महाद्रिषु महीपतेः ।
कोणेषु च कृतं येन वर्षेवर्षे कुलीरगे ॥
नाभौ चाशेषनक्षत्रे मुहूर्ते नागराह्वये ।
अमावास्यापरार्धे तु भान्ते लक्ष्मीस्सुभुज्यते ॥
एतत्पुण्यं गृहे कुर्यात् सर्वान्कामानवाप्नुयात् ।

इति शेषसंहितायां द्वात्रिंशोध्यायः.

---

## व्याधिशान्तिः.

शेषः—

सुदर्शनन्नृसिंहस्य भजनाल्लभ्यते सदा ।
आयुरारोग्यविजयं राज्यश्रीवर्धनं तथा ॥
सर्वव्याधिविनाशं च देहान्ते मोक्षमुत्तमम् ।
महापातकयुक्तानां सर्वेषां च चतुर्मुख ॥
भवसागरमग्नानां तत्पापफलभोगिनाम् ।
औषधं मूलमेव स्यात् वैद्यो नारायणो हरिः ॥
अष्टाङ्गयोगयुक्तानां मन्त्रमेव विधीयते ।
संसारयोगयुक्तानां मणिमन्त्रौषधादिकम् ॥
दानहोमादिकं सर्वं कल्पयेद्विधिनाऽब्जज ।
आयुर्वेदप्रकारेण तदाचार्येण कारयेत् ॥
सर्वौषधानि मूलानि शास्त्रज्ञानार्थपूर्वकम् ।
दरिद्रश्रोत्रियेभ्यो वै कुर्याद्दानं महत्तरम् ॥

उपोद्यानादिकं कुर्यात् अग्रहारादिकं तथा ।
महारोगादिकं सर्वं तस्य शाम्यति निश्चयात् ॥
मन्त्रैरङ्गैर्जपं कुर्यात् मन्त्राचार्येण धीमता ।
मन्त्रशीलेन कर्तव्यं यन्त्रोद्धरणमुत्तमम् ॥
तस्य मृत्युभयं नास्ति सद्यश्शन्तिर्भविष्यति ।
होमेन कर्मभिः कुर्यात् समिदाज्यादिभेदतः ॥
सर्वग्रहविनाशः स्यात् होमेन तिलशर्करैः ।
अपामार्गैस्तथा कुर्यात् सहस्रं वाऽयुतं तु वा ॥
शर्कराघृतसंमिश्रं गुग्गुलं अगुरुं तथा ।
महाशान्तिर्भवेत्पञ्चहोमैस्सर्वं वशं नयेत् ॥
सर्वार्थं जुहुयान्मन्त्री अपामार्गं घृताक्तकम् ।
क्षीरेण घृतसंयुक्त चूर्णैः होमेन मन्त्रवित् ॥
अन्तर्बहिःकपालादिमसूरी नश्यति ध्रुवम् ।
दन्तरोगस्य शान्त्यर्थं नाळिकेरतिलैर्यजेत् ॥
सर्वप्रमेहशान्त्यर्थं अयुतं जुहुयाद्बुधः ।
जटामांसी हरिद्रा च शतावरि घृताक्तकम् ॥
श्वदष्टे मूत्रकृच्छ्रे च अश्विनीकुण्डलीघृतम् ।
अपामार्गतिलांस्तद्वत् गोघृतेनाक्तकं हुनेत् ॥
अष्टादशादिकुष्ठानां सर्षपं तिलसंयुतम् ।
हरिद्रागुडसंयुक्तं करवीरं घृताक्तकम् ॥
अङ्कोलतिलतैलेन हुनेत्तदयुतार्थकम् ।
यजेज्ज्वरे रक्तपित्ते आज्याह्वतिलान् कुशान् ॥

कण्ठरोगे त्रिशूले च यजेल्लवणसंयुयतम् ।
नासातुलसिसंयुक्तं अपामार्गार्कसंयुतम् ॥
तिन्त्रिणीपुष्पदूर्वांश्च तिलव्रीहियवांस्तथा ।
महास्फोटे विसर्पे च महाग्रन्ध्येच विद्रवे ॥
पुनर्नविसुगन्धी च अश्वगन्धि मधुत्रयम् ।
क्षीराणि जुहुयान्मन्त्री तिलचन्दनकुङ्कुमम् ।
कर्णरोगे यजेन्मन्त्री चन्दनागरुसंयुतम् ॥
कर्पूरतिलगोक्षीरसंयुतं घृतसंयुतम् ।
खासश्वासे ज्वरे चैव कुण्डलीपुत्रहोमकम् ॥
तिलतण्डुलमध्वक्तं गोक्षीरतिलकं यजेत् ।
पुनर्नवी वज्रवल्ली भृङ्गी लवणसंयुतम् ॥
अर्कं च तिलतैलेन महोदरनिवारणम् ।
अपामार्गार्कपत्रेण गुल्मशूले यजेत्तथा ॥
राजयक्ष्मे यजेन्मन्त्री शर्करात्रिमधुर्गुडम् ।
हरिद्रामलकं चूर्णं अपामार्गतिलाक्षतान् ॥
क्षये यजेद्व्चामाषान् मधुत्रययुताक्षतान् ।
अश्वगन्धकमूलं च पायसं तिलगुग्गुलम् ॥
निम्बपर्णामृता वल्ली अपामार्गं च शर्करा ।
मधुत्रयं च गोक्षीरं पित्ते मन्त्री यजेद्बुधः ॥
श्रेष्ठरोगस्यैवमेव कुर्यादयुतसंख्यया ।
अपामार्गं च निर्गुण्ढी तिलकं शुकसर्षपान् ॥
हरिद्राचूर्णमेकं च यजेद्वाते कटुत्रयम् ।

तर्पणं चायुतं कुर्यात् ज्वरे गोक्षीरचन्दनैः ।
चन्दनागरुकर्पूरजलेन ध्यानभेदतः ।
सर्वरोगविनाशार्थं मन्त्री स्पृष्ट्वाऽयुतं जपेत् ॥
दर्शान्ते यो यजेद्ध्यायन् अयुतद्वयमादरात् ।
चन्दनागरुकर्पूरपञ्चामृतसुकुम्भकैः ॥
पुष्पाद्यैरर्च्य विन्यस्य प्रतिमावस्त्रसंयुतम् ।
ज्वरशान्त्यै जपेन्मन्त्री अयुतं ध्यानभेदतः ॥
जलं स्पृष्ट्वाऽभिमन्त्र्याथ दद्यात्तज्ज्वरशान्तये ।
आकण्ठान्तर्जले स्थित्वा जपेत्तज्ज्वरशान्तये ॥
अपामार्गं त्रिमध्वक्तं हुनेत्तज्ज्वरशान्तये ।
अज्ञातज्ञातरोगाणां त्रिमध्वक्तान् तिलाक्षलान् ॥
अपामार्गान् भद्रमुस्तान् पूर्वपायससंयुतम् ।
नृसिंहरामचक्रादिमहामन्त्रैर्यजेद्बुधः ॥
मण्डलध्यानभेदज्ञः कुर्यादेतच्चतुर्मुख ।
धर्मकामादिकं मोक्षः सर्वं होमेन सिद्ध्यति ॥

इति शेषसंहितायां त्रयस्त्रिंशोध्यायः.

---

## मन्त्रप्रयोगः.

शेषः—

मूलादिसर्वमन्त्राणां प्रयोगो वक्ष्यतेऽधुना ।
षट्कर्मफलसिद्ध्यर्थं मोक्षज्ञानात्मशुद्धिदाः ॥
मूलमन्त्रद्वयं तद्वत् सुदर्शननृकेसरिम् ।

सौदर्शनहयग्रीवं श्रीभूनीळान् चतुर्मुख ।
वराहं नारसिंहं च रामं कृष्णं तु गारुडम् ।
विष्णुमन्त्रं वासुदेवं गायत्रीं पुरुषसूक्तकम् ॥
एते सर्वे महामन्त्राः प्रभोगफलदायकाः ।
दुर्गां भद्रां च सन्मन्त्री विष्णुक्रान्तं तिलाक्षतान् ॥
बिल्वपत्रं श्वेतपद्मं अपामार्गं मधुत्रयम् ।
शतपत्रं कुङ्कुमं च दूर्वां तु करवीरकम् ॥
आयुःश्रीराज्यलाभार्थी सह योज्य हुनेद्बुधः ।
पुष्ट्यर्थे जुहुयान्मन्त्री गोधूमतिलगोघृतम् ॥
शतपत्रं कुमुदं च भवनाभिनवाद्भवेत् ।
यशस्कामी यजेद्विद्वान् केसरस्य प्रसूनकैः ॥
चणप्रसूनात् कमलात् धनकामी यजेत्तथा ।
जुहुयात्सर्वसिद्ध्यर्थे गोघृतेन तिलान् कुशान् ॥
अन्नकामी यजेद्धान्यानाज्येनान्नेन मन्त्रवित् ।
फलान् सर्वान् पङ्कजांश्च बिल्वामलकपाटलान् ॥
लक्ष्मीलाभविचारज्ञो जुहुयान्निश्चयं भवेत् ।
रणे मोक्षे यजेन्मन्त्री तिलहोमं घृतेन च ॥
अपामार्गतिलान् पद्मान् दधिक्षीराज्यसंयुतम् ।
तुष्टिपुष्टिसुखारोग्यं लक्ष्मीलाभमकृत्रिमम् ॥
पूर्वोक्तहवनात्सर्वं लभते तु त्रिपूरुषम् ।
चन्दनागरुकर्पूरघृतपङ्कजदूर्वकान् ॥
सदैश्वर्यायुरारोग्ये यजेन्मण्डलभेदतः ।

महतीं श्रियमाप्नोति रक्ताम्बुजातिलाक्षतैः ॥
राज्यार्थी चक्रमन्त्रेण सितपद्मान्यजेत्तिलान् ।
अश्वत्थब्रह्मपालाशानाज्येनैव च खादिरान् ॥
शत्रुक्षये तु भूलाभे यजेन्मन्त्रविदब्जज ।
ज्ञानार्थी जुहुयान्मन्त्री ब्रह्मशुष्ककुशाक्षतान् ॥
यजेदौदुम्बरं चार्थे श्रीकामो बिल्वमेव च ।
कन्यार्थी जुहुयाल्लाजान् वश्यार्थी जातिपुष्पकान् ॥
सर्वसिद्धावपामार्गं महाशान्तौ तु पङ्कजान् ।
घृत शर्करसंयुक्तं अगुरुं गुग्गुलं तथा ॥
अयुतं जुहुयान्मन्त्री सर्वसिद्धिर्भविष्यति ।
वृष्टिकामो यजेन्मन्त्री वैतसान् किंशुकांस्तथा ॥
तत्तत्कर्मसु तद्द्रव्यैर्यजेदयुतसङ्ख्यया ।
होमेन सर्वं लभते सत्यमेव चतुर्मुख ॥

इति शेषसंहितायां चतुस्त्रिंशोध्यायः.

---

## गायत्रीकल्पः.

शेषः—

अथ वक्ष्ये विधानेन गायत्रीकल्पमुत्तमम् ।
नित्यकर्मप्रकारेण प्रयोगाद्यादिकं विना ॥
अष्टाक्षरं च गायत्रीं मुमुक्षुर्न प्रयोजयेत् ।
प्रपत्तिस्तद्वदेव स्यात् सत्यमेव न संशयः ॥
शैवं पौराणिकं तन्त्रं पञ्चसंस्कारहीनकम् ।

द्विजश्रेष्ठः त्यजेद्ब्रह्मन् कर्म संसारकारकम् ॥
नित्यनैमित्तिकोक्तेन पञ्चरात्रेण कारयेत् ।
यावज्जीवं द्विजश्रेष्ठः कुर्यात्सन्ध्यादिकं सदा ॥
चतुर्विंशत्यक्षरा गायत्री सम्यगब्जज ।
प्रणवं पूर्वमुद्धृत्य तद्वत्तत्सवितुस्तथा ॥
वरेण्यं सम्यगुद्धृत्य भर्गो देवस्य धीमहि ।
धियो यो नस्समुद्धृत्य तद्वत्सम्यक्प्रचोदयात् ॥
ॐभूर्भुवस्स्वरित्यादौ योज्यं स्यान्मूलविद्यया ।
तदङ्गं मन्त्रसंयुक्तं गायत्रीं च जपेद्द्विजः ॥
त्रिसन्ध्यायां हरिं ध्यायन् धर्ममोक्षार्थसिद्धये ।
प्राणायामविधानेन शोषणाद्यादिपूर्वकम् ॥
वाय्वग्न्यमृतबीजैश्च शोषणादिकमाचरेत् ।
पश्चाद्विद्वान् द्विजश्रेष्ठः प्राणायामन्तु मन्त्रवित् ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥
प्रणवन्यासकं पूर्वं कुर्याद्गायत्रमेव च ।
गायत्र्याश्च ऋषिस्सम्यक् ब्रह्म तद्वत्सदा भवेत् ॥
गायत्री छन्द इत्युक्तो देवता विष्णुरुच्यते ।
नीं बीजं तु च श्रीं शक्तिः कीलकं ह्रीं तथाऽब्जज ॥
कवचं ऐं च रं शस्त्रं वर्णं हैरण्मयं स्मरेत् ।
प्रणवेन षडङ्गं तु करन्यासं समाचरेत् ॥
पदत्रयं द्विरुच्चार्य षडङ्गं कारयेद्बुधः ।

व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥
एतदेव प्रकुर्वीत नित्यं कर्म चतुर्मुख ।
अन्यत् न्यसादिकं सर्वं प्रयोगादौ न्यसेद्बुधः ॥

ध्यानम्—

ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणस्सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुः धृतशङ्खचक्रः ॥

ध्यानं कृत्वा नमस्कुर्यात् स्वगोत्रप्रवरान्वितम् ।
ब्रह्मयज्ञादिकं पश्चात् पञ्चकालविधानतः ॥
तत्तदाश्रमभेदेन नित्यनैमित्तिकं चरेत् ।

## गायत्रीयन्त्रम्.

गायत्रींयन्त्ररूपं च वक्ष्ये तन्मन्त्रसिद्धये ॥
लिखेदष्टदलं पद्मं तन्मध्ये प्रणवं लिखेत् ।
श्रीं मायां च तथा नीलां नृसिंहं परितो लिखेत् ॥
दलेषु विलिखेन्मूलं लिखेत्सन्धौ नृसिंहकम् ।
श्रीबीजेन सुसंवेष्टय तद्बहिर्विलिखेद्बुधः ॥
चतुर्विंशद्दलानि स्युः गायत्रीं तद्दलेषु च ।
सन्धौ तु चक्रगायत्रीं वेष्टयेन्मायया लिखेत् ॥
तद्बहिः पौरुषं सूक्तं श्रीभूसूक्ते तथाऽब्जज ।
क्रमेण विलिखेन्मन्त्री तद्बहिः परितो लिखेत् ॥

ककारादिक्षकारान्तं हंसहंसेत्यनन्तरम् ॥
रक्ष रक्षेति संयोज्य साध्यं कर्म सदर्हितम् ।
विलिखेस्तद्बहिस्तद्वत् माययाऽऽवेष्टयेद्बहिः ॥
पाशाङ्कुशेन संवेष्ट्य इन्द्रादीन्विलिखेद्बुधः ।
लिखेद्यन्त्रवरं धीमान् धर्ममोक्षार्थसिद्धये ॥
गायत्री पौरुषं सूक्तं एकमेव सुनिश्चयः ।
अर्थैक्यं देवतैक्यं च सत्यमेव न संशयः ॥
नित्यनैमित्तिके चैव प्रायश्चित्तादिकर्मसु ।
धर्मकामार्थमोक्षेषु गयत्रीं तच्च सूक्तकम् ॥
मूलमन्त्रं मन्त्ररत्नं नारसिंहं सुदर्शनम् ।
रामं कृष्णं वराहं च तर्कयेद्विधिनाब्जज ॥

इति शेषसंहितायां पञ्चत्रिंशोध्यायः.

---

## गायत्र्यङ्गम्.

शेषः—

गायत्रेरङ्गमन्त्राणि वक्ष्ये सम्यग्यथातथम् ।
न्यासध्यानादिसहितं गायत्रीमन्त्रसिद्धये ॥
अष्टाक्षरा गायत्रीति मनुमुपसंहारमन्त्रकम् ।
ॐभूरिति प्रथमतः ओं भुवश्च ततः परम् ॥
ओं सुवश्च ततश्चैव ओं महश्च चतुर्मुख ।
ओं जनश्च तथा सम्यक् ओं तपश्च ततः परम् ॥

ओं सत्यं व्याहृतीस्सप्त गायत्रेः पूर्वमुच्चरेत् ।
ओमापो ज्योतिरित्युक्त्वा रसोऽमृतमनन्तरम् ॥
ब्रह्म भूर्भुवस्सुवरोमिति चापि ततः परम् ।
प्राणायामे इदं कुर्यात् जपे तच्छीर्षकं विना ॥
ओंभूर्भुवस्सुवरिति गायत्रीं मूलविद्यया ।
पदत्रयाङ्गमन्त्राणि वक्ष्ये सम्यग्यथाविधि ॥
आसत्येन रजसाऽऽदि अगन्मज्योतिरुत्तमान्तं पूर्ववदङ्गमन्त्रकम् ।
उदुत्यं जातवेदसादि सूर्य आत्मा जगतस्तस्थुषश्चान्तं द्विपद-
स्याङ्गमन्त्रकम् ।
वेदाहमेतं पुरुषादि अयनाय विद्यतेत्यन्तं त्रिपदस्याङ्गमन्त्रकम् ॥
त्रिसन्ध्यायां जपान्तेतु अङ्गमन्त्रास्त्रयस्त्रयः ।
गायत्र्या अङ्गमन्त्राणि जपेन्मोक्षार्थसिद्धये ॥
एतान्येवाङ्गमन्त्राणि सत्यमेव चतुर्मुख ।

इति शेषसंहितायां षट्त्रिंशोध्यायः.

---

## गायत्र्यङ्गाङ्गम्.

शेषः—

सम्यग्वक्ष्येऽथ गायत्रेरङ्गाङ्गादिमनुं तथा ।
गायत्रीमन्त्रसिद्ध्यर्थं मोक्षज्ञानात्मशुद्धये ॥
ओमित्येकाक्षरं ब्रह्मादिसायुज्यादिविनियोगान्तं जपादावुच्चरेत्ततः ।
आयातु वरदादेव्यादि बलमावाह्य गायत्र्यादौ जपेत्ततः ॥
गायत्री सावित्री सरस्वती छन्दर्षिस्तथा ।

श्रियं बलमिति ज्ञात्वा षावाहं क्रमात् स्मरेत् ॥
ऋषिन्यासं ततः कुर्यात् षडङ्गन्तु ततः परम् ।
प्राणायामं ततो ध्यानं पूर्वोक्तक्रमयोगतः ॥
यथाविधि जपं चाथ कृत्वा न्यासं पुनस्तथा ।
मित्रस्यादि ततस्तिष्ठन् अन्तितो न दूरान्तं सूर्यं दृष्ट्वा जपेत्ततः ॥
संध्यायै नम इत्युक्त्वा साविञ्यै नम इत्यपि ।
गायञ्यै नम इत्युक्त्वा सरस्वत्यै नमस्तथा ॥
गुरुभ्यो नम इत्युक्त्वा पितृभ्यो नम इत्यपि ।
कामोऽकार्षीन्मन्युरकार्षीन्नमो नमो नम इति ॥
मुक्तेभ्यो नम इत्युक्त्वा नित्येभ्यो नम इत्यपि ।
श्रीमन्नारायणायेति नमोन्तन्तु वदेद्बुधः ॥
ध्येयस्सदेति पूर्वोक्तध्यानं कुर्याद्धरिं स्मरन् ।
अभिवन्दनकं कार्यं स्वगोत्रप्रवरान्वितम् ॥
तद्वन्मध्याह्नसंध्यायां जपान्ते सन्मुमुक्षुभिः ।
उपस्थाने तु भेदोऽस्ति तद्भेदः चोच्यते मया ॥
आसत्येन रजसा सूर्यो विपश्चिन्मनसा पुनात्वित्यन्तं जपेत्तथा ।
सायंकाल उपस्थाने इमम्मे वरुणेत्यादि आयुः प्रमोषीरित्यन्तं पूर्ववज्जपेत् ॥
नमस्कारादिकं सर्वं प्रातःकालवदाचरेत् ।
प्रातःकाले प्राङ्मुखस्स्यात् अन्ते पश्चिमतो मुखः ॥
ध्यात्वैवमथ गायत्रीं मुमुक्षुः सततं जपेत् ।
अन्यथा ये करिष्यन्ति ते यान्ति नरकं ध्रुवम् ॥

अयमेव मुमुक्षूणां परमैकान्तिनां विधिः ।
तस्मात्सर्वप्रयत्नेन नित्यकर्म समाचरेत् ॥
कर्मादिब्रह्मयोगान्तं नित्यकर्म इति स्मृतम् ।
शुद्धसत्त्वमिदं ब्रह्म गुह्याद्गुह्यतमं सदा ॥

इति शेषसंहितायां सप्तत्रिंशोऽध्यायः.

---

## भूवराहमन्त्रः.

शेषः—

भूवराहं तथा वक्ष्ये यन्त्रतन्त्रादिसंयुतम् ।
न्यासध्यानादिकं सर्वं सम्यक् तद्वद्यथातथम् ॥
ओन्नमो भगवते चैव वराहरूपायेति च ।
भूर्भुवस्स्वःपतये भूपतित्वं मे देहीति च ॥
ददापय स्वाहेति च हुंकारादि चतुर्मुख ।
मन्‌ तद्वराहस्य सर्वराज्यप्रदायकः ॥
ऋाषर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता भूवराहश्च ओं बीजं शक्तिः श्रीं तथा ॥
ह्रीं कीलकं ऐं कवचं क्लीं अस्त्रं श्वेतवर्णकम् ।
वराहैकाक्षरेणैव करन्यासं समाचरेत् ॥
ओंनमोभगवतेत्युक्त्वा प्रथमं हृदये न्यसेत् ।
वराहरूपाय तथा तद्वन्मूर्ध्नि क्रमेण च ॥
भूर्भुवस्स्वःपतये भूपतित्वं क्रमण तु ।
मे देहीति तथा ब्रह्मन् ददापय स्वाहेति च ॥

षड्वाक्यैस्तु षडङ्गन्तु कुर्यात्तद्योगपल्लवैः ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥
चातुरङ्गविधानेन जपेल्लक्षं सुमन्त्रवित् ।
जपहोमादिकं सर्वं यन्त्रहीनस्य नश्यति ॥

भूवराहयन्त्रः.

तद्यन्त्रं तु तथा वक्ष्ये राज्यदेशादिकांक्षिणाम् ।
षट्कोणं चक्रमालिख्य सर्वमन्त्रविशारदः ॥
हुंकारन्तु लिखेन्मध्ये कर्मसाध्यसमन्वितम् ।
वराहाय स्वाहेति तत्कोणेषु विलिखेत् क्रमात् ॥
ओन्नमो विष्णव इति तत्सन्धौ विलिखेच्छुचिः ।
मायाबीजेन संवेष्ट्य बहिरष्टदलं लिखेत् ॥
यज्ञवराहाय हुंफट् तद्दलेषु लिखेद्बहिः ।
ओं जयजय नृसिंहं तत् सन्धौ सम्यगालिखेत् ॥
मायाबीजेन संवेष्ट्य बहिरष्टदलेषु च ।
श्रीबीजेन सुसंवेष्ट्य तद्बहिः सिद्धमन्त्रकः ॥
विलिखेद्द्वादशदलं दलेषु विलिखेद्गुरुः ।
ओन्नमो भगवते चैव वासुदेवाय उद्धरेत् ॥
तत्सन्धौ किमभूत्तद्वत् जानकीवल्लभाय च ।
स्वाहामनुं लिखेद्ब्रह्मन् तद्बहिः षोडशं दलम् ॥
लिखेत्सर्वान् तद्दलेषु नीलाबीजेन वेष्टयेत् ।
तद्बहिर्विलिखेन्मन्त्री चतुर्विंशद्दलान् क्रमात् ॥
दलेषु मन्त्रभेदज्ञो भूवराहं लिखेत्क्रमात् ।

तद्बहिर्व्यञ्जनानि स्युः मान्मथेनैव वेष्टयेत् ॥
हंसहंसेति साध्यन्तु रक्षरक्षेतिसंयुतम् ।
परितो विलिखेन्मन्त्री प्रणवेन तु वेष्टयेत् ॥
पाशाङ्कुशेन संवेष्ट्य दिक्षु चेन्द्रादिकं लिखेत् ।
एतद्यन्त्रं लिखेद्ब्रह्मन् राज्यदेशादिसिद्धये ॥
प्राणप्रतिष्ठां तन्त्राद्यैः मन्त्रविद्विधिना तथा ॥

इति शेषसंहितायां अष्टत्रिंशोऽध्यायः.

---

## भूवराहाङ्गमन्त्रः.

शेषः—

भूवराहस्य मन्त्रस्य अङ्गमन्त्रान् ब्रवीम्यहम् ।
अष्टैश्वर्यादिराज्यादिसमस्तफलदायकान् ॥
ह्रीं श्रीं हिरण्यवर्णायै नमोन्तं मनुमुद्धरेत् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ॥
देवता श्रीमहालक्ष्मीः ह्रीं शक्तिः श्रा बीजमुच्यते ।
क्लीं कीलकं ऐं कवचं सौं अस्त्रं रक्तवर्णकम् ॥
श्रीबीजेन करन्यासं कुर्यात्पूर्वं चतुर्मुख ।
तन्मन्त्रं तु द्विरावर्त्य षडङ्गं कारयेद्बुधः ॥
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ।
पौरश्चरणहोमादीन् श्रीबीजोक्तवदाचरेत् ॥
श्रीं ह्रीं पदमुच्चार्य हिरण्यै नम इत्यपि ।
मनुरेतत्तथा ब्रह्मन् सर्वसिद्धिप्रदायकः ॥
ऐंह्रीं पदमुद्धार्य मनुं पूर्ववदब्जज ।

सुवर्णरजतस्रजां स्वाहान्तं स्यान्महत्तरम् ॥
ह्रींश्रीं पदमुच्चार्य चन्द्रायै नम उच्चरेत् ।
न्यासध्यानादिकं सर्वं भूबीजवदपि स्मृतः ॥
श्रींह्रीं पदमुद्धार्य चन्द्रायै नम इत्यपि ।
मनुं पूर्ववदुद्धार्य जपेदैश्वर्यसिद्धये ॥
ह्रींश्रीं क्लीं उद्धार्य तद्वदेव हिरण्मये ।
हुंफट् स्वाहामनुस्स स्यात् सर्वसंहारकारकः ॥
श्रींह्रीं उद्धार्य लक्ष्म्यै च नमोन्तं पूर्ववन्मनुम् ।
ह्रींश्रीं क्लीं ऐं लक्ष्म्यै स्वाहा मनुस्स्यात्सर्वदायकः ॥
श्रींह्रीमनपगामिन्यै स्वाहा स्यात् पूर्ववन्मनुः ।
श्रीं ह्रीं क्लीं अश्वपूर्वायै हुं फट् स्वाहामनुस्तथा ॥
ह्रीं श्रीं ऐं रथमध्यायै मनुस्स्वाहाऽथ पूर्ववत् ।
श्रीं ह्रीं ऐं क्लीं प्रबोधिन्यै मनुस्स्यात्पूर्ववत्ततः ॥
ह्रीं क्लीं ए श्रीं श्रियै स्वाहा मनुः पूर्ववदब्जज ।
क्लीं ह्रीं ऐं श्रीं तथा देव्यै मनुस्सर्वः नमोऽन्तकः ॥
ऐं क्लीं ह्रीं श्रीं जुषतायै पूर्ववदब्जज ।
श्रीं ह्रीं क्लीं कां सोस्मितायै हुंफट्स्वाहाथ पूर्ववत् ॥
ह्रीं हिरण्यप्राकारायै नमस्स्यात्पूर्ववन्मनुः ।
ऐं श्रींह्रीमार्द्रायै स्वाहा मनुर्मोहप्रदायकः ॥
ह्रीं ज्वलन्त्यै हुंफट्स्वाहा मनुस्संहारकारकः ।
श्रीं बं यमथ तृप्तायै स्वाहामनुस्स्याद्रोगनाशनः ॥
श्रीं ह्रीं तर्पयन्त्ये स्वाहा मनुस्स्यात् पुष्टिवर्धनः ।

ह्रीं पद्मेस्थितायै नमः पूर्ववन्मनुरुत्तमः ॥
ह्रीं पद्मवर्णायै स्वाहा स्यात्पूर्वत्तथा ।
ह्रीं डं वं चन्द्रायै स्वाहा मनुस्स्यात् पुष्टिवर्धनः ॥
श्रीं देवजुष्टायै स्वाहा मनुस्स्यादुत्तमः तथा ।
श्रीं ह्रीं उदाराङ्गायै नमः पूर्ववन्मनुरुत्तमः ॥
श्रीं ह्रीं आदित्यवर्णायै मनुस्स्वाहाथ पूर्ववत् ।
श्रीं ह्रीं ऐं गन्धद्वारायै स्वाहा स्यात्पूर्ववन्मनुः ॥
श्रीं ह्रीं दुराधर्षायै नमः पूर्ववन्मनुरुत्तमः ।
ह्रीं बं मं वं नित्यपुष्टायै स्वाहा सर्वार्थदायकः ॥
श्रीं ह्रीं कर्षिण्यै पूर्ववन्मनुरब्जज ।
श्रीं ह्रीं पुष्करिण्यै स्वाहा मनुस्सर्वार्थदायकः ॥
श्रीं ह्रीं ऐं ष्ट्रां क्ष्रीं क्ष्रौं यष्ट्यै नमो मनुरिहोत्तमः ।
श्रीं ह्रीं पिङ्गलायै स्वाहा मनुः जयात्मकस्तथा ॥
श्रीं ह्रीं पद्ममालिन्यै स्वाहा मनुः स्याद्दुत्तमोत्तमः ।
क्ष्रूं पद्मप्रियायै नमः पूर्ववन्मनुरुत्तमः ॥
श्रीं ह्रीं ष्रां क्लीं पद्मिन्यै नमः पूर्ववदब्जज ।
ह्रीं पद्महस्तायै स्वाहा मनुस्यादुत्तमोत्तमः ॥
क्ष्रौं पद्मालयायै नमः पूर्ववन्मनुरुत्तमः ।
क्ष्रीं पद्मदलायताक्ष्यै स्वाहा मनुरुत्तमः ॥
श्रीं ह्रीं विश्वप्रियायै नमः पूर्ववदब्जज ।
क्ष्मीं विष्णुमनोनुकूलायै स्वाहा मनुरुत्तमः ॥
श्रीं ह्रीमथ महादेव्यै स्वाहा स्यान्मनुरुत्तमः ।

श्रीं ह्रीं ऐं ह्रीं विष्णुपत्न्यै नमस्स्यादुत्तमोत्तमः ॥
तद्विष्ण्वाद्यङ्गमन्त्राणां अङ्गान्येवं तथाऽब्जज ।
होमकाले विशेषेण योजयेन्मन्त्रसिद्धये ॥
एतल्लक्ष्म्यादिमन्त्राणां सर्वं श्रीसूक्तवद्भवेत् ।
एवं कर्मविजानीयात् ततः कर्माणि योजयेत् ॥

इति शेषसंहितायां एकोनचत्वारिंशोऽध्यायः.

---

## सूर्यमन्त्रः.

शेषः—

भूवराहस्य मन्त्रस्य क्षत्रियाणां फलाय च ।
वक्ष्ये अङ्गाङ्गिमन्त्राणि न्यासध्यानादिभेदतः ॥
आसत्येन रजसा वर्तमानो निवेशयन् अमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन् ॥
उद्वयं तमसस्परिपश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
नारायणो देवता च अं बीजं शक्तिः अं तथा ॥
वं कीलकं वं कवचं रं अस्त्रं रक्तवर्णकम् ।
आ सत्येन रजसा वर्तमानो निवेशयन्निति हृदये न्यसेत् ॥
अमृतं मर्त्यंचति स्यात् शिरसि न्यासमुत्तमम् ।
हिरण्ययेन सविता रथेनेति शिखायामपि न्यसेद्बुधः ॥
आ देवो याति भुवना विपश्यन्निति न्यसेद्बाह्वोस्सुमन्त्रवित् ।
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तममिति मन्त्रविन्नेत्रयोर्न्यसेत् ॥

देवंदेवत्रासूर्यमिति दिग्बन्धं कारयेद्बुधः ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥

ध्येयस्सदासवितृमण्डलमध्यवर्ती
नारायणस्सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुः धृतशङ्खचक्रः ॥

**सोममन्त्रः.**

अनन्तरं तथा वक्ष्ये सोममन्त्रं यथाविधि ।
सोमो धेनुं सोमो अर्वन्तमाशुम् ।
सोमो वीरं कर्मण्यं ददातु ॥ इति सोममन्त्रः ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥
हयग्रीवो देवता च सं बीजं शक्तियं तथा ।
वं कीलकं यं कवचं यमस्त्रं श्वेतवर्णकम् ॥
सोमो धेनुं हृदि न्यस्य मूर्ध्नि सोमो अर्वन्तञ्च ।
आशुं न्यसेच्छिखायान्तु सोमो वीरं करद्वये ॥
नेत्रद्वये तु कर्मण्यं दिग्बन्धः स्याद्ददात्विति ।
व्याप्यादीन् पूर्ववन्न्यस्य ध्यायेच्चन्द्रगतं हरिम् ॥

ध्यानम्—

वन्दे पूरितचन्द्रमण्डलगतं श्वेतारविन्दासनं
मन्दाकिन्यमृताब्जकुन्दकुमुदक्षीरेन्दुहासं हरिम् ।
मुद्रापुस्तकशङ्खचक्रविधृतश्रीमद्भुजामण्डलं
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥

### अङ्गारकमन्त्रः.

पर्यायेण तथा वक्ष्ये अङ्गारकमनुर्यथा ।
अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वतीत्यङ्गारकमन्त्रः ।
ऋषी रुद्रोऽस्य मन्त्रस्य पङ्क्तिच्छन्द उदाहृतः ॥
श्रीनृसिंहो देवता च कं बीजं शक्तिउं तथा ।
यं कीलकं रं कवचं रं अस्त्रं रक्तवर्णकम् ॥
अग्निर्मूर्धा दिवः ककुत् पूर्ववत् हृदये न्यसेत् ।
पतिःपृथिव्या अयं ज्ञानाद्यैः पूर्ववन्न्यसेत् ॥
अपां रेतांसि जिन्वतीति शिखायां तु न्यसेद्बुधः ।
एतत्पादत्रयेणैव बाहुनेत्रास्त्रकं न्यसेत् ॥
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेण न्यसेद्बुधः ।
चतुश्चक्रधरं देवं अङ्गारान्तर्बहिःस्थितम् ॥
ज्वालामालाधरं वध्दे भजेदुग्रनृकेसरिम् ।

### बुधमन्त्रः.

उद्बुध्यस्वाग्ने प्रतिजागृह्येन
मिष्टापूर्ते संसृजेथामयञ्च ।
पुनः कृण्वंस्त्वा पितरं युवान
मन्वातांसि त्वयि तन्तुमेतमितिबुधमन्त्रः ॥
ऋषिर्गार्ग्योऽस्य मन्त्रस्य त्रिष्टुप्छन्द उदाहृतः ।
मत्स्यरूपो हरिर्देवो ङं बीजं शक्ति तं तथा ॥

लं कीलकं वं कवचं यं अस्त्रं श्वेतवर्णकम् ।
उद्बुध्यस्वाग्नेति हृदि न्यसेत् ज्ञानादिसंयुतम् ॥
शिरसि प्रतिजागृह्येनमिष्टापूर्ते शिखायाञ्च
बाह्वोः संसृजेथामयञ्च नेत्रयोः ।
पुनःकृण्वंस्त्वा पितरं युवानमन्वातांसि
त्वयि तन्तुमेतं दिग्बन्धेयोजयेद्गुरुः ॥
व्याप्यादीन् पूर्ववत्सम्यक् तन्मन्त्रेणैव कारयेत् ।
बुधान्तर्यामिणं देवं मत्स्यरूपहरिं विभुम् ॥
शङ्खचक्रधरं सौम्यं भजे वेदान्तवेदितम् ।

## बृहस्पतिमन्त्रः.

बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति तनुमज्जनेषु ।
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं देहि चित्रम् ॥ इति
बृहस्पतिमन्त्रः ॥

ऋषिरिशिवोऽस्य मन्त्रस्य छन्दस्त्रिष्टुप् तथाऽब्जज ।
देवता च हयग्रीवो अं बीजं शक्ति अं तथा ॥
वं कीलकं ठं कवचं ऐं अस्त्रं श्वेतवर्णकम् ।
बृहस्पते अतियदर्य इति हृदये न्यसेत् ।
अर्हाद्द्युमद्विभाति योगाद्यैश्शिरसि न्यसेत् ॥
तनुमज्जनेषु शिखायान्तु न्यसेद्बुधः ।
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं बाह्वोर्न्यसेत् ।
द्रविणं देहि नेत्रयोः चित्रमस्त्रे न्यसेत्तथा ॥
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेण न्यसेद्गुरुः ।

शङ्खचक्रधरं देवं बृहस्पतिहृदि स्थितम् ॥
हयग्रीवं विभुं सौम्यं भजे विद्याधिदैवतम् ।

### शुक्रमन्त्रः.

शुक्रन्ते अन्यद्यजतन्ते अन्यत्
विषुरूपे अहनी द्यौरिवासि ।
विश्वाहि माया अवसि स्वधा वो
भद्रा ते पूषन्निह रातिरस्तु ॥ इति ।

ऋषिर्गौतम इत्युक्तो छन्दस्त्रिष्टुप् प्रजापते ।
देवता वामनः प्रोक्तो शुं वीजं शक्तिः इं तथा ॥
यं कीलकं यं कवचं यं अस्त्रं श्यामवर्णकम् ।
शुक्रन्ते अन्यद्धृदये न्यासमाचरेत् ॥
यजतं ते अन्यत् शिरसि ज्ञानादिभेदतः ॥
विषुरूपे अहनी द्यौरिवासि शिखायां विन्यसेत्ततः ।
विश्वा हि माया अवसि स्वधा वो बाह्वोर्न्यासं समाचरेत् ॥
भद्रा ते पूषन्नेत्रयोरिह रातिरस्तु अस्त्रं विन्यसेत् ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥
शुक्रान्तर्यामिणं देवं सृष्टिस्थित्यन्तकारिणम् ।
सर्वमोहकरं धीरं वामनं सततं भजे ॥

### शनिमन्त्रः.

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शंयोरभिस्रवन्तु नः । इति शनिमन्त्रः ॥

ऋषिर्धातास्य मन्त्रस्य पङ्क्तिश्छन्दस्तथैव च ।
पातालनृहरिर्देवो शं बीजं शक्ति नं तथा ॥
वं कीलकं लं कवचं यं अस्त्रं श्यामवर्णकम् ।
शं नो देवीरभिष्टयेति ज्ञानाद्यैर्हृदि विन्यसेत् ॥
आपो भवन्तु पीतयेति शिरसि न्यस्य मन्त्रवित् ।
शंयोरभि स्रवन्तु नेति शिखायां विन्यसेद्गुरुः ॥
एतत्पदत्रयेणैव बाहुनेत्रास्त्रकं न्यसेत् ।
व्याप्यादीन्पूर्ववन्न्यस्य ध्यायन् सम्यक् चतुर्मुख ॥
अष्टचक्रधरं देवं विभुं शनिहृदि स्थितम् ।
नीलाभरणभूषाङ्गं पातालनृहरिं भजे ॥

## राहुमन्त्रः.

कयानश्चित्र आभुवदूती सदावृधस्सखा ।
कया शचिष्ठया वृता ॥ इति ।
ऋषिः रुद्रोऽस्य यन्त्रस्य छन्दस्त्रिष्टुप् तथाऽब्जज ।
परशुरामो देवता च अं बीजं शक्तिः औं तथा ॥
अं कीलकं लं कवचं यं अस्त्रं रक्तवर्णकम् ।
कयानश्चित्र आभुवत् ज्ञानाद्यैर्हृदि विन्यसेत् ॥
ऊतीसदावृधस्सखा शिरसि न्यासमाचरेत् ।
कया शचिष्ठया वृता इति शिखायान्तु विन्यसेत् ॥
एतत्पदत्रयेणैवं बाहुनेत्रास्त्रकं न्यसेत् ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥

रक्तवर्णमुदाराङ्गं रक्ताभरणभूषितम् ।
भजे परशुरामं तं सर्वशत्रुविदारणम् ॥

### केतुमन्त्रः.

केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथा इति ॥ इति ।

केतुं कृण्वन्न केतवे इतिज्ञानाद्यैर्हृदि विन्यसेत् ।
पेशो मर्या अपेशसेति शिरसि न्यसेत् ॥
समुषाद्भिः शिखायान्तु बाह्वोस्तद्वदजायथाः ।
केतुं कृण्वन्न केतवे पेशसेति नेत्रयोर्न्यसेत् ॥
समुषद्भिरजायथा इति अस्त्रे स योजयेत् ।
व्याप्यादीन्पूर्ववन्नयस्य कुर्यान्मण्डलभेदतः ॥

### कार्तवीर्यमन्त्रः.

कार्तवीर्यं महाकायं कालानलसमप्रभम् ।
भजे सर्वहरं क्रूर सर्वदुःखहरं प्रभुम् ॥
ऋषिः शिवोऽस्य मन्त्रस्य छन्दस्त्रिष्टुप् तथैव च ।
देवता कार्तवीर्यश्च रं बीजं शक्तिरं तथा ॥
यं कीलकं यं कवचं रं अस्त्रं श्यामवर्णकम् ।
कुर्यात् षडङ्गं सन्मन्त्री ऋष्यादिन्यासपूर्वकम् ॥
ग्रहवक्रे महोत्पात क्षुद्ररोगाद्युपद्रवे ।
नवग्रहस्य पूजां च शुचिविप्राः सवैष्णवाः ॥

भूवराहस्य मन्त्रेण सहैव जपपूर्वकम् ।
कुर्युः तत्फलसिद्ध्यर्थं होमाद्यैस्तच्चतुर्मुख ॥

इति शेषसंहितायां चत्वारिंशोऽध्यायः.

---

## हयग्रीवमन्त्रोद्धारः.

शेषः—

हयग्रीवमनुं वक्ष्ये यन्त्रतन्त्रादिसंयुतम् ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं वेदवेदान्तसिद्धये ॥
ऋग्यजुस्सामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवपुषे महाश्वशिरसे नमः ॥
एतदेव हयग्रीवमनुर्विद्याप्रदायकः ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥
देवता श्रीहयग्रीवो ऋं बीजं शक्तिमं तथा ।
वं कीलकं ठं कवचं यं अस्त्रं श्वेतवर्णकम् ॥
न्यसेत्पादचतुष्केण तदर्धद्वयसंयुतम् ।
षडङ्गंकारयेन्मन्त्री करे देहे तथाऽब्जज ॥
तन्मन्त्रेण न्यसेद्विद्वान् व्याप्यं तद्व्यापकं स्मरन् ।
द्वात्रिंशत्तु सहस्राणि जपेद्ध्यायन् चतुर्मुख ॥
चन्द्रमण्डलमध्यस्थं हयग्रीवं विभुं प्रभुम् ।
शङ्खचक्रधरं सौम्यं भजे विद्याप्रदायकम् ॥
दशाङ्गंतर्पयेद्विद्वान् गोक्षीरेण च भक्तितः ।
पूजयेद्बिल्वपत्रैश्च कमलैः जातिभिस्सह ॥
वचाब्राह्मीत्रिमध्वक्तं माण्डिशोर्णिसमान्वितम् ।

सर्वशास्त्रार्थसिद्ध्यर्थं जुहुयात्कमलासन ॥
एतत्कर्मकृतेनैव सर्वविद्याधिपो भवेत् ।

हयग्रीवयन्त्रः.

अथयन्त्रं प्रवक्ष्यामि मन्त्रविद्यार्थसिद्धये ॥
षट्कोणं चक्रमालिख्य तन्मध्ये साध्यसंयुतम् ।
एकाक्षरं लिखेन्मन्त्री श्रीभूनीळादिसंयुतम् ॥
कोणेषु विलिखेद्धीमान् हयग्रीवं विभुं तथा ।
तत्सन्धौ विलिखेद्विष्णुं षडक्षरमतन्द्रितः ॥
मायाबीजेन संवेष्ट्य बहिरष्टदलं लिखेत् ।
दलेषु विलिखेत्सम्यक् महाश्वशिरसे नमः ॥
तत्सन्धौ विलिखेन्मूलं हयं बीजेन वेष्टयेत् ।
तद्बहिर्द्वादशदलं लिखेत् सम्यक् चतुर्मुख ॥
तारं तारानुतारं च महामायां रमामपि ।
हयग्रीवाय नम इति दलेषु विलिखेत् शुचिः ॥
लिखेत्सन्धौ वासुदेवं श्रीबीजेन च वेष्टयेत् ।
तद्बहिः षोडशदलं दलेषु विलिखेत्तथा ॥
ओं नमो भगवते चैव हयग्रीवाय संयुतम् ।
हुंफट् स्वाहां तथोद्धृत्य षोडशाक्षरमुत्तमम् ॥
बहिस्स्वरान्विलिख्याथ मान्मथेनैव वेष्टयेत् ।
चतुर्विंशद्दलं लिख्य गायत्रीं तद्दलेषु च ॥
तत्सन्धौ सौरगायत्रीं लिखेत्तद्बहिरुत्तमाम् ।
तद्बहिर्द्वादशदलं विलिखेत्तद्दलेषु च ॥

हयग्रीवमनुं लिख्य तत्सन्धौ सम्यगब्जज ।
श्रीरामानुष्टुभं लिख्य नीलाबीजेन वेष्टयेत् ॥
तद्बहिः हंसहंसेति रक्षरक्षेति साधकम् ।
पाशाङ्कुशेन संवेष्ट्य इन्द्रादीन् तद्बहिर्लिखेत् ॥
प्राणप्रतिष्ठां कृत्वाथ तद्यन्त्रं धारयेद्बुधः ।
जिह्वास्तम्भं वाग्जयं च विद्यासिद्धिं शुभं जयम् ॥
आरोग्यं लभते सर्वं एतद्यन्त्रस्य धारणात् ॥

इति शेषसंहितायां एकचत्वारिंशोध्यायः.

---

## हयग्रीवाङ्गमन्त्रः.

हयग्रीवाङ्गमन्त्राणि वक्ष्ये न्यासादिसंयुतम् ।
तारं मायां रमां नीलां माम्मथं लक्ष्मिसंयुतम् ॥
लक्ष्मीनृसिंहं श्रीं चैव नारसिंहं वराहकम् ।
उद्धरेद्बीजमालायां गोप्येनैव जपेत्सदा ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
परमात्मा देवता च श्रीं बीजं शक्तिश्रीं तथा ॥
लीं कीलकं ऐं कवचं यं अस्त्रं रक्तवर्णकम् ।
षडङ्गं षट्स्वरैर्न्यस्य ध्याप्यं तद्वच्चतुर्मुख ॥
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।
नारायण परोज्योतिरात्मा नारायणः परः ॥
इदमेव रहस्यं हि सर्वमन्त्रेषु दुर्लभम् ।
जपेद्गोप्यतमं मन्त्रं सर्वदा सर्वसिद्धये ॥

इति शेषसंहितायां द्विचत्वारिंशोध्यायः.

---

## हयग्रीवाङ्गाङ्गमन्त्रः.

शेषः—

हयग्रीवस्य चाङ्गाङ्गमन्त्राण्येव यथातथम् ।
सर्वधर्मार्थसिध्यर्थं वक्ष्ये तन्मन्त्रसिद्धये ॥
नारायणं वासुदेवं विष्णुं वाराहमब्जज ।
रामं कृष्णं प्रपत्तिं च न्यासाद्यैस्संस्मरन् जपन् ॥
अष्टाविंशति वा सम्यक् दश वा पञ्च वा त्रयः ।

इति शेषसंहितायां त्रिचत्वारिंशोऽध्यायः.

———

## मन्त्रराजः.

शेषः --

मन्त्रराजं तथा वक्ष्ये भुक्तिमुक्तिप्रदायकम् ।
यन्त्रतन्त्रादिसहितं राज्यश्रीकाङ्क्षिणां तथा ॥
उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
श्रीनृसिंहो देवता च उं बीजं शक्ति गं तथा ॥
लं कीलकं ह्रीं कवचं यं अस्त्रं रक्तवर्णकम् ।
नृसिंहैकाक्षरेणैव करन्यासं समाचरेत् ॥
पादैरर्धैष्षडङ्गं तु मन्त्रराजेन कारयेत् ।
कुर्यात्तन्मन्त्रराजेन व्याप्यं तद्व्यापकं स्मरन् ॥
अनन्तबाहूदरवक्त्रनेत्रं अनेककोट्यर्कनिकाशरूपम् ।
अभेद्यमानन्दमयं सुरेशं भजामि रुद्रारिविभुं नृसिंहम् ॥

गोक्षीरेणाम्भसा सम्यक् तर्पयेदङ्गसङ्ख्यया ।
पूजयेद्बिल्वपत्रैश्च जुहुयात्कमलासन ॥
बिल्वप्रसूनहवनात् राज्यमृच्छति वाञ्छितम् ।
घृताक्तकञ्जहवनात् अष्टैश्वर्यमवाप्नुयात् ॥
अपामार्गस्य हवनात् सर्वं सिध्यति सर्वदा ।

मन्त्रराजयन्त्रः.

मन्त्रार्थज्ञानसिध्यर्थं यन्त्रोद्धारः तदुच्यते ॥
षट्कोणं पूर्वमालिख्य तन्मध्ये साध्यसंयुतम् ।
नृसिंहैकाक्षरं मायां लिखेत्कर्मादिसंयुतम् ॥
क्ष्रौंनृसिंहेतिहुंफट्च षट्कोणेषु लिखेत्क्रमात् ।
तत्सन्धौ विलिखेन्मन्त्री सौदर्शनषडक्षरम् ॥
तद्बहिर्माययावेष्ट्य बहिरष्टदलं लिखेत् ।
ओं जयजयनृसिंहेति तद्दलेषु लिखेत्तथा ॥
तत्सन्धौ मूलमालिख्य वेष्टयेद्रमया बुधः ।
तद्बहिर्द्वादशदलं दलेषु परितः क्रमात् ॥
तारतारानुतारं च महामायां रमामपि ।
नारसिंहाय नम इति विलिखेन्मन्त्रवित्तमः ॥
तत्सन्धौ वासुदेवाख्यमनुं तद्वादशाक्षरम् ।
श्रीबीजेन सुसंवेष्ट्य तद्बहिः षोडशं दलम् ॥
दलेषु विलिखेन्मन्त्री क्ष्रौं नमो भगवतेति च ।
नारसिंहाय हुं फट् स्वाहा मनुमिदं क्रमात् ॥
तद्बहिर्माययावेष्ट्य द्विर्द्वादशदलं लिखेत् ।

दलेषु विलिखेन्मन्त्री गायत्रीं नारसिंहकम् ॥
तत्सन्धौ सौरगायत्रीं वेष्टयेन्मायया लिखेत् ।
द्वात्रिंशद्दलमालिख्य मन्त्रराजं दलेषु च ॥
चक्रस्यानुष्टुभं सन्धौ वेष्टयेन्मायया लिखेत् ।
तद्बहिः पुरतः सम्यक् हंसहंसेतिसंयुतम् ॥
तत्साध्यं रक्षरक्षेति कर्मनामविदार्हितम् ।
पाशाङ्कुशेन संवेष्ट्य अष्टदिक्षु लिखेत्क्रमात् ॥
तदिन्द्राद्यष्टबीजादीन् विलिखेन्मन्त्रवित्तमः ।
प्राणप्रतिष्ठां कृत्वाऽथ धारयेद्यन्त्रमुत्तमम् ॥
जपहोमादिसिद्ध्यर्थं अष्टकर्मसु सिद्धये ।
अष्टैश्वर्यादिसिद्ध्यर्थं मोक्षधर्मार्थसिद्धये ॥
एतद्यन्त्रं लिखेद्ब्रह्मन् मन्त्रराजमनुत्तमम् ।

इति श्रीशेषसंहितायां चतुश्चत्वारिंशोऽध्यायः

---

## नृसिंहराजाङ्गमन्त्रः.

शेषः—

नृसिंहराजमन्त्रस्य अङ्गमन्त्रोऽपि चोच्यते ।
मोक्षधर्मादिसिद्ध्यर्थं जपेत्पूर्वोक्तसंख्यया ॥
मूलमन्त्रं मन्त्ररत्नं रामं कृष्णं वराहकम् ।
सुदर्शनहयग्रीवं पक्षिराजं जपेत्सदा ॥

इति श्रीशेषसंहितायां पञ्चचत्वारिंशोऽध्यायः

---

## वायुमन्त्रः.

शेषः—

नृसिंहमन्त्रराजस्य अङ्गाङ्गानि यथातथम् ।
न्यासध्यानादिसंयुक्तं वक्ष्ये मन्त्राणि तत्क्रमात् ॥

मारुतमसि मरुतामोजोपान्थारां भिन्दि रमयत मरुत श्येन
मायिनं मनोजवसं वृषणं सुवृक्तिम् । येन शर्ध उग्रमव-
सृष्टमेति तदश्विना परिधत्तं स्वस्ति ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
देवता उग्रनृहरिः अं बीजं शक्तिः उं तथा ॥
रं कीलकं मं कवचं रं अस्त्रं रक्तवर्णकम् ।
बिन्दुवृत्तं स्वस्तिमन्तं कृत्वा तत्तत्पदत्रये ॥
स्वरावृत्तिषडङ्गन्तु कुर्यान्न्यासं विचक्षणः ।
विभुं तेजोमयं देवं द्वात्रिंशच्चक्रधारिणम् ॥
रुद्रारिं विश्वरूपाढ्यं भजे उग्रनृकेसरिम् ।
एवं ध्यात्वा जपेत् त्रिस्त्रिर्मन्त्राण्येकादश क्रमात् ॥

## रुद्रमन्त्रः.

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितोऽवधी-
र्हविष्मन्तो नमसा विधेम ते ॥

ऋषिर्धातास्य मन्त्रस्य छन्दो गायत्रं उच्यते ।
देवता वीरनृहरिः मं बीजं शक्तिरों तथा ॥

यं कीलकं रं कवचं यं अस्त्रं रक्तवर्णकम् ।
रिरिषोवधीर्मते त्रिः कुर्यान्न्यासं पदत्रयैः ॥
द्विरावृत्ति सुमन्त्रज्ञो ध्यानमण्डलभेदतः ।
रक्ताभरणभूषाढ्यं सर्वायुधधरं विभुम् ॥
तेजोमयमुदाराङ्गं भजे वीरनृकेसरिम् ।

## नित्यसूरिमन्त्रः.

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् । विष्णोः कर्माणि पश्यत । यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यस्सखा । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते । विष्णोर्यत्परमं पदम् ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
महाविष्णुर्देवता च त्रं बीजं शक्ति दं ततः ॥
लं कीलकं वं कवचं यमस्त्रं रक्तवर्णकम् ।
वेदान्तवेद्यं यज्ञेशं सर्वदेवनमस्कृतम् ॥
भजामि सततं देवं महाविष्णुं नृकेसरिम् ।

## ज्वालामन्त्रः.

ज्वालामालाकुलं भाति विश्वस्यायतनं महत् ॥
सन्ततꣳ सिराभिस्तुलम्बत्याकोशसन्निभम् ।
तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ।
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।
सोऽग्रभुग्विभजंस्तिष्ठन्नाहारमजरः कविः ॥

सन्तापयति स्वं देहं आपादतलमस्तकम् ।
तिर्यगूर्ध्वमधश्शाखी रश्मयस्तस्य सन्तताः ॥
तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट् ॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥
वाक्यद्वयैस्सुनेत्रान्तं न्यस्य सम्यक् विचक्षणः ।
अन्यवाक्येन तद्ब्रह्मन् कुर्यात् दिग्बन्धनं क्रमात् ॥
कालानलसमप्रख्यं षट्कोणान्तःस्थितं विभुम् ।
ज्वालामालाधरं देवं भजे ज्वालानृकेसरिम् ॥

## विश्वरूपमन्त्रः.

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैः द्यावाभूमी जनयन् देव एकः ॥
ऋषिः ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता विश्वनृहरिः कं बीजं शक्तिमं तथा ॥
लं कीलकं यं कवचं यं अस्त्रं रक्तवर्णकम् ।
अनन्तमच्युतं धीरं विश्वरूपं प्रभुं विभुम् ॥
नृसिंहं देवदेवेशं तं भजे सर्वतोमुखम् ।

## सिंहमन्त्रः.

मृगो न भीमः कुचरो गिरिष्ठाः । परावत आजगाम परस्याः ।
सृकंसंशायपविमिन्द्रतिग्मम् । विशत्रून्ताधिविमृधोनुदस्व ।

विशत्रून्विमृधोनुद । विवृत्रस्यहनूरुज । विमन्युमिन्द्रभामितो
मित्रस्याभिदासतः ॥

एतद्वाक्यैः षडङ्गन्तु कुर्यान्न्यासं स मन्त्रवित् ।
आदिमध्यान्तरहितं सच्चिदानन्दरूपिणम् ॥
नमामि नरसिंहं तं सर्वशत्रुविनाशनम् ।

**भयहरमन्त्रः.**

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥
ऋषिर्धाताऽस्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता भीमनृहरिः अं बीजं शक्तिमं तथा ॥
यं कीलकं रं कवचं रं अस्त्रं रक्तवर्णकम् ।
सूर्यान्तःपञ्चमस्त्रिस्त्रः त्रिरावृत्त्य षडङ्गकम् ॥
न्यासं कुर्यात्सुमन्त्रज्ञो विक्रमार्थी विचक्षणः ।
महाभयंकरं भीमं विश्वेशं तं गदाधरम् ॥
धीरं नारायणं देवं भजेमहि नृकेसरिम् ।

**भद्रमन्त्रः.**

भद्रं कर्णेभिश्शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरै-
रङ्गैस्तुष्टुवांसः तनूभिः । व्यशेम देवहितं यदायुः ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता भद्रनृहरिः हं बीजं शक्तियं तथा ॥
लं कीलकं यं कवचं रं अस्त्रं रक्तवर्णकम् ।
यजत्रान्तपदार्धं त्रिरुच्चार्य च षडङ्गकम् ॥

न्यासं कुर्यात्तदा ध्यायन् तत्तन्मण्डलभेदतः ।
श्रीभूनीळादिसहितं सर्वाभरणभूषितम् ॥
विरूपाक्षं महाविष्णुं भजे भद्रनृकेसरिम् ।

मृत्युमन्त्रः.

त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीय मामृतात् ॥
ऋषिर्धाताऽस्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवता मृत्युनृहरिः स्त्रीं बीजं शक्ति तां तथा ॥
यं कीलकं रं कवचं रं अस्त्रं रक्तवर्णकम् ।
बन्धनान्तामृतान्ताच्च त्रिरावृत्त्या षडङ्गकम् ॥
न्यासं कुर्यात् हृदादेर्दिग्बन्धनान्तं सुबुद्धिमान् ।
शिवेशं सर्वलोकेशं विश्वरूपं त्रियम्बकम् ॥
भजे मृत्युनृसिंहं तं चक्रसाहस्रधारिणम् ।

बृहन्मन्त्रः.

नमो ब्रह्मणे । नमो अस्त्वग्नये । नमः पृथिव्यै । नम ओषधीभ्यः । नमो वाचे । नमो वाचस्पतये । नमो विष्णवे बृहते करोमि ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
वासुदेवनृसिंहश्च देवतेति स्मरन् द्विजः ॥
ओं बीजं शक्तिश्रीं चैव ध्यानमण्डलभेदतः ।
ह्रीं कीलकं ऐं कवचं यं अस्त्रं रक्तवर्णकम् ॥

ब्रह्मणे नमः पृथिव्यै तु धीभ्योऽतो चे करोमि च ।
एतत्पदैष्षडङ्गं तु कुर्यान्मन्त्रविचक्षणः ॥
नीलकण्ठेशमानन्दं नारायणमनामयम् ॥
सर्वान्तर्यामिणं वन्दे वासुदेवनृकेसरिम् ।
स्तम्भनोच्चाटमरणे जपेद्रक्षोगणं स्मरन् ॥
रक्षोहणो वलगहनः कृणुष्वपाज एवच ।
वश्याकृष्ये च मोहे च विष्णुसूक्तं जपेत्तथा ॥
विष्णोर्योन्याद्यक्षिभ्यान्तमनामावृतिष्ठान्त शान्तिकान् ।

### ज्योतिर्मन्त्रः.

आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि ।
योऽहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ॥
पदत्रयैष्षडङ्गन्तु कुर्यान्न्यासं चतुर्मुख ।
तत्तन्मन्त्रैः जपेत्तत्तत् व्याप्त्यादीन्कारयेत्तथा ॥
जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥
मन्त्रराजं जपेत्सम्यक् एतदङ्गादिकं जपेत् ।
मोक्षधर्मादिसिद्ध्यर्थं कर्ममन्त्रार्थसिद्धये ॥
चण्डवाय्वागमे सम्यक् अग्निचोराद्युपद्रवे ।
गारुडं पूर्वमुच्चार्य मन्त्रराजं ततः परम् ॥
वायव्यꣳ श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता ।
वायुमेव स्वेन भागधेयेनोपधावति । स एवास्मै इति संयुतम् ॥
षट्कोणं स्वकरे ध्यात्वा दर्शनाभिमुखं स्मरन् ।

पार्थिवं मण्डलं तत्र जपेद्ध्यायन्निवर्तके ॥
तत्क्षणात् स्तम्भनं याति ब्रह्मा रुद्रादयस्तथा ।
महारोगादिभूताद्याः वन्यसत्त्वाद्युपद्रवाः ॥
स्तम्भनोच्चाटनं याति सत्यमेव चतुर्मुख ।
वक्ष्येऽथान्यद्रहस्यं तु समाहितमनाश्शृणु ॥
पूर्वं गारुडमुच्चार्य ततश्चक्रनृकेसरिम् ।
रामकृष्णादिकं वापि जपेद्ध्यायन् ततः परम् ॥

पथस्पथःपरिपतिं वचस्याकामेनकृतोअभ्यानडर्कंसनोरासच्छुरुध-
श्चन्द्राधियंधियंसीषधातिप्रपूषा। क्षेत्रस्यपतिनावयं। हितेनेव
जयामसि। गामश्वंपोषयित्न्वासनोमृडातीदृशे ॥

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥

कामः समृध्यतामह्यमपराजितमेवमेयंकामंकामयेदेवतन्मेवायोसम-
र्थय। अनुहवं परिहवं परीवादं परिक्षपं दुःस्वप्नं दुरुदितं
तद्विषद्भ्यो दिशाम्यहम् ॥

अनुहूतं परिहूतं अपरिहूतं शकुनैर्यदशाकुनम् ।
मृगस्यसृतमक्षणया तद्विषद्भ्यो दिशाम्यहम् ॥
समध्वरायोषसोनमन्तदधिक्रावेवशुचयेपदाय ।
अर्वाचीनं वसुविदं भगन्नोरथमिवाश्वावाजिनआवहन्तु ॥
अश्वावतीर्गोमतीर्णउषासोवीरवतीस्सदमुच्छन्तुभद्राः ।
घृतंदुहानाविश्वतःप्रपीनायूयंपातस्वस्तिभिःसदानः ॥
इति ध्यानं प्रकुर्वीत जपे गच्छन् द्विजोत्तमः ।
प्रातःकाले प्रयाणे च जपे होमार्चनादिषु ॥

संग्रामे व्यवहारेषु गमनागमनेषु च ।
गच्छन् जपेदिदं सौम्यं ध्यानमण्डलभेदतः ॥
इदं रहस्यं सर्वेषां चतुर्मुख जयार्थिनाम् ।

इति श्रीशेषसंहितायां षट्जत्वारिंशाध्यायः.

---

## सुदर्शनमन्त्रः.

शेषः—

अथ वक्ष्ये विधानेन सुदर्शनमनुं तथा ।
न्यासध्यानादियन्त्राद्यैः अङ्गैरङ्गाङ्गसंयुतम् ॥
सहस्रारेति संयुक्तं हुंफडुद्धारयेद्बुधः ।
मनुः स्याच्चक्रराजस्य सर्वसिद्धिप्रदायकः ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
चक्रराजो देवता च सं बीजं शक्तिफट् तथा ॥
ह्रीं कीलकं ऐं कवचं रं अस्त्रं रक्तवर्णकम् ।
प्रणवेन करन्यासं कुर्यान्मन्त्राक्षरैस्सह ॥
हृदादिकं तथा कुर्याद्व्याप्यादीन्पूर्ववन्न्यसेत् ।
सुचक्राय विचक्राय पञ्चचक्राय संयुतम् ।
असुरान्तकचक्राय ज्वालाचक्राय संयुतम् ॥
त्रैलोक्यचक्राय चेति षडङ्गं कारयेद्बुधः ।
एतत् षडङ्गं तन्त्रेण सर्वसिद्धिं लभेत्सदा ।
अनन्तमव्ययं क्रूरं षट्कोणान्तरवर्तिनम् ॥
सौदर्शनविभुं देवं भजे रुद्रपितामहम् ॥

चतुरङ्गविधानेन तर्पयेच्चन्दनाम्भसा ।
पूजयेच्छतपत्रैस्तु जुहुयान्यन्त्रवित्तमः ॥
अपामार्गैस्तिलैः पद्मैः खादिरैस्सघृतैः द्विजः ।
तत्क्षणाद्ब्रह्मविद्ब्रह्मन् सर्वसिद्धिमवाप्नुयात् ॥

## यन्त्रोद्धारः.

वक्ष्ये तन्मन्त्रसिद्ध्यर्थं तद्यन्त्रोद्धारणं शुभम् ।
षट्कोणं चक्रमालिख्य मध्ये प्रणवसंयुतम् ॥
मायया साध्यमालिख्य कर्मनामविदर्हितम् ।
कोणे सुदर्शनं लिख्य सन्धौ विष्णुषडक्षरम् ॥
माययाऽऽवेष्टयेन्मन्त्री बहिरष्टदलं लिखेत् ।
ओंमहाचक्राय स्वाहेति विलिखेत्तद्दलेषु च ॥
लिखेत्सन्धौ मूलमन्त्रं श्रीबीजेनैव वेष्टयेत् ।
लिखेद्बहिर्द्वादशकं तारतारानुतारकम् ॥
महासुदर्शनायेति नमोन्तं मन्त्रमालिखेत् ।
वासुदेवं लिखेत्सन्धौ मान्मथेनैव वेष्टयेत् ॥
लिखेद्बहिष्षोडशकं तारतारानुतारकम् ।
रामं चिन्तामणिं क्रोडं सुदर्शननृसिंकम् ॥
ज्वालाचक्राय हुंफट्च तथा स्वाहामनुं लिखेत् ।
तत्सन्धौ तु स्वरान् लिख्य तद्बीजेनैव वेष्टयेत् ॥
तद्बाहिर्विलिखेन्मन्त्री चतुर्विंशद्दलान् क्रमात् ।
तद्गायत्रीं दलेष्वेव सन्धौ सौरं लिखेद्बुधः ॥

नृसिंहेन सुसंवेष्ट्य तद्बहिर्मन्त्रसाधकः ।
द्वात्रिंशद्दलमालिख्य तद्दलेषु सुमन्त्रवित् ॥
तदनुष्टुभमालिख्य तत्सन्धौ मन्त्रराजकम् ।
प्रणवेन सुसंवेष्ट्य हंसहंसेति तद्बहिः ॥
रक्षरक्षेति संयोज्य मायया परितो लिखेत् ।
पाशाङ्कुशेन संवेष्ट्य इन्द्रादीन्विलिखेद्बुधः ॥
प्राणप्रतिष्ठां कृत्वाथ तत्तत्कर्मसु योजयेत् ।
क्षत्रविट्शूद्रजातीनां एतद्यन्त्रस्य धारणात् ॥
सर्वसिद्धिः भवेत्सत्यं अभिषेकपुरस्सरम् ।
मन्त्रशीलगुरुणा त्विदं लभेत् अन्यथा नहि फलं कदाचन ॥
मन्त्रशीलगुरुरेव सद्गुरुः मन्त्रहीनगुरु मेरुवद्गुरुः ।
तप्तचक्रादिदाता वै शिखावत्कमलासन ॥
मन्त्रसंयुक्ततद्दाता प्रतिष्ठागुरुरिष्यते ।
विष्णुमन्त्ररतो विप्रो सदामन्त्राश्रयश्शुचिः ॥
स एव ब्रह्मविद्ब्रह्मन् मोक्षदाता गुरुर्भवेत् ।
अष्टाङ्गयोगयुक्तोवै ब्रह्मनिष्ठागुरुर्भवेत् ॥
तद्गुरुं ह्याश्रयेद्धीमान् सर्वबन्धविमुक्तये ॥

इति श्रीशेषसंहितायां सप्तचत्वारिंशोध्यायः.

---

## अङ्गमन्त्रः.

शेषः—

सौदर्शनस्य मन्त्रस्य अङ्गमन्त्रमथोच्यते ।
मूलमन्त्रं मन्त्ररत्नं मन्त्रराजं रमां तथा ॥

रामं कृष्णं वराहं च हयग्रीवं यथाविधि ।
वासुदेवं तथा विष्णुं उक्तया पूर्वसंख्यया ॥
सौदर्शनस्य मन्त्रस्य सिद्धये सर्वदा जपेत् ।

इति श्रीशेषसंहितायां अष्टचत्वारिंशोध्यायः.

---

## चक्राङ्गमन्त्रः.

शेषः—

चक्रराजस्य चाङ्गाङ्गमन्त्राण्यपि तथा शृणु ।
अनन्तं वैनतेयं च विष्वक्सेनं हनूमकम् ॥
नवग्रहान् पञ्चशान्तिं जपेत्तन्मन्त्रसिद्धये ।
न्यासध्यानादिसंयुक्तं ध्यानमण्डलभेदतः ॥

इति श्रीशेषसंहितायां एकोनपञ्चाशोध्यायः.

---

## पक्षिराजमन्त्रः.

शेषः—

पक्षिराजमनुं वक्ष्ये न्यासध्यानादिभेदतः ।
मन्त्रहोमादिसंयुक्तं तदङ्गाङ्गादिकं तथा ॥
व्यत्यस्तपक्षिसंयुक्तं तारं स्वाहान्तसंयुतम् ।
एतद्धि पक्षिराजस्य मनुस्स्याच्छत्रुनाशकः ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
गरुडो देवता प्रोक्तो क्षीं बीजं शक्ति हुं तथा ॥
वं कीलकं ठं कवचं यमस्त्रं श्वेतवर्णकम् ।
अङ्गुष्ठादिकनिष्ठान्तं मन्त्रवर्णान्न्यसेत्क्रमात् ॥

पादे करे च हृदये वक्त्रे मूर्ध्नि च तत्क्रमात् ।
मन्त्रवर्णान्न्यसेन्मन्त्री व्याप्यादीन् पूर्ववन्न्यसेत् ॥
हृदि स्वकर्णयोर्मूर्ध्नि पादाग्रे गण्डपूर्वके ।
तारं तु क्षिपसंयुक्तं स्वाहान्तं प्रणवान्तकम् ॥
एतन्मन्त्रेणैव कुर्यात् हृदादिन्यासकं स्थितः ।
एतत् षडङ्गकं ब्रह्मन् गुह्याद्गुह्यतमं शुभम् ॥
श्वेतवर्णं विभुं शान्तं श्वेतपद्मोपरिस्थितम् ।
विश्वरूपधरं देवं पक्षिराजं भजाम्यहम् ॥
चातुरङ्गविधानेन तर्पयेत्कुङ्कुमाम्भसा ।
पूजयेत् श्वेतपद्मैश्च जुहुयान्मन्त्रवित्तमः ॥
अपामार्गस्य हवनात् सर्वसिद्धिं लभेत्सदा ।
निम्बकाष्ठस्य हवनात् शीघ्रमुच्चाटनं भवेत् ॥
तिलाज्यकञ्जहवनात् लक्ष्मीलाभं लभेत्सदा ।
तत्तद्द्रव्येण हवनात् तत्तत्फलमवाप्नुयात् ॥

यन्त्रः.

पञ्चकोणं समालिख्य मध्ये तद्बीजसंयुतम् ।
कर्मनामसमायुक्तं लिखेत्साध्यं चतुर्मुख ॥
तार्क्ष्यपञ्चाक्षरं सम्यक् कोणेषु विलिखेत्ततः ।
तत्संधावमृतं लिख्य तद्बीजेनैव वेष्टयेत् ॥
बहिरष्टदलं लिख्य लिखेन्मूलं दलेषु च ।
नृसिंहाष्टाक्षरं संधौ लिखेत्तद्वेष्टयेत् श्रिया ॥

बहिर्लिखेत्सुमन्त्रज्ञो द्वादशं दलमुत्तमम् ।
ओंनमः पक्षिराजाय हुंफट्स्वाहामनुं लिखेत् ॥
लिखेत्संधौ वासुदेवं मायया वेष्टयेत् शुचिः ।
तद्बाहिः षोडषदलं लिखेत्तन्मनुरुच्यते ॥
ओन्नमः प्रचण्डगरुडाय हनहनहुंफट् ।
तस्य संधौ स्वरान् लिख्य लक्ष्मीबीजेन वेष्टयेत् ॥
बहिर्लिखेच्चतुर्विंशद्दलान् तत्र दलेषु च ।
लिखेद्गरुडगायत्रीं तत्संधौ सौरकं लिखेत् ॥
प्रणवेन सुसंवेष्ट्य द्वात्रिंशारं बहिर्लिखेत् ।
ताक्ष्यानुष्टुप् तद्दलेषु लेख्यः संधौ नृसिंहकम् ॥
मायया वेष्टयेद्धीमान् तद्बहिस्साध्यसंयुतम् ॥
हंसहंसेति संयोज्य रक्षरक्षेति संयुतम् ।
तत्तत्कुरुष्वेति तत्तत्पदवीथीर्लिखेत् शुभाः ॥
पाशाङ्कुशेन संवेष्ट्य इन्द्राद्यष्ट बहिर्लिखेत् ।
प्राणप्रतिष्ठां कृत्वाऽथ यन्त्रं कर्मसु योजयेत् ॥
धारयेयुस्सदा सर्वे राज्यश्रीमोक्षकांक्षिणः ।
यन्त्राणामुत्तमं ब्रह्मन् एतद्यन्त्रं भवेच्छुभम् ॥

इति श्री शेषसंहितायां पञ्चाशोध्यायः.

---

अङ्गमन्त्रः

शेषः—

पक्षिराजाङ्गमन्त्राणि संग्रहेण वदाम्यहम् ।
न्यासध्यानादिसहितं जपेत्तत्पूर्वसंख्यया ॥

मूलमन्त्रं मन्त्ररत्नं विष्णुं तद्वासुदेवकम् ।
रामं कृष्णं वराहं च नारसिंहं सुदर्शनम् ॥
हयग्रीवन्तु वाराहं जपेत्तन्मन्त्रसिद्धये ।
ध्यानमण्डलभेदज्ञः तत्तन्मन्त्रविशारदः ॥

इति श्री शेषसंहितायां एकपञ्चाशोध्यायः.

---

अङ्गमन्त्रः

शेषः—

पक्षिराजस्य चाङ्गानि प्रकारान्तरतः शृणु ।
तत्तन्मण्डलभेदज्ञः तद्वदेव जपेत्सदा ॥
कार्तवीर्यं मर्कटेशं मायां लक्ष्मीं नवग्रहान् ।
न्यासध्यानादिभेदेन स्मरन् तत्पूर्वसंख्यया ॥

इति श्री शेषसंहितायां द्विपञ्चाशोऽध्यायः.

---

राममन्त्रः

शेषः—

अथ वक्ष्येविधानेन श्रीराममनुमुत्तमम् ।
न्यासयन्त्रादिसहितं अङ्गाङ्गादिसमन्वितम् ॥
अग्निबीजं समुद्धृत्य रामाय नम इत्यपि ।
मनुमुद्धारयेन्मन्त्री तारकं ब्राह्ममुत्तमम् ॥
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
श्रीरामो देवता ब्रह्मन् रंबीजं शक्तिमं तथा ॥

श्रीं कीलकं ह्रीं कवचं लंअस्त्रं श्यामवर्णकम् ।
तद्बीजेन करन्यासं तन्मन्त्रस्य पदत्रयैः ॥
षडङ्गं कारयेन्मन्त्री ध्यानकर्मादियोगतः ।
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव कारयेत् ॥
परात्परं विभुं दवं वैशेषपरमात्मकम् ।
चापबाणधरं धीरं रामं सीतापतिं भजे ॥
चातुरङ्गविधानेन तर्पयेच्चन्दनाम्भसा ।
श्वेतपद्मैर्बिल्वपत्रैः करवीरैस्तु चाम्पकैः ॥
नन्द्यावर्तैरशोकैश्च पूजयेद्राममादरात् ।
राज्यार्थी जुहुयात्पद्मैः कन्यार्थी लाजकैर्यजेत् ॥
यजेत्कुन्दैः खादिरैस्तु निंबकाष्ठैस्तु सर्षपैः ।
वश्याकृष्यादिमोहे च त्रिमधुं गुग्गुलं स्थितम् ॥
तिलपायससंयुक्तं यजेन्मण्डलभेदतः ।
तत्तद्द्रव्यस्य हवनात् तत्तत्फलमवाप्नुयात् ॥

## यन्त्रः.

जपकर्मादि सिद्ध्यर्थं वक्ष्ये तद्यन्त्रमुत्तमम् ।
षट्कोणं पूर्वमालिख्य तन्मध्ये साध्यसंयुतम् ॥
तद्बीजन्तु श्रिया ब्रह्मन् कर्मनाम लिखेत्तथा ।
तत्कोणेषु लिखेन्मन्त्री श्रीरामस्य षडक्षरम् ॥
सीतारामं च तत्संधौ तद्बीजेनैव वेष्टयेत् ।
बहिरष्टदलं लिख्य तद्बीजं तु नमोन्तकम् ॥

रामचन्द्राय विलिखेत् तद्दलेषु सुमन्त्रवित् ।
तत्संधौ रं समुद्धृत्य लक्ष्मणाय नमो लिखेत् ॥
क्रोडबीजेन संवेष्ट्य तद्बहिर्द्वादशं दलम् ।
लिखेद्दलेषु ओं श्रीं च जानकीवल्लभाय च ॥
स्वाहा लिखेच्च तत्संधौ वासुदेवमनुं लिखेत् ।
तद्बहिष्षोडशदलं तद्दलेषु लिखेत्क्रमात् ॥
रां नमो भगवते रामभद्राय हुं फट् स्वाहा ।
तत्संधौ तु स्वरान् लिख्य लक्ष्मीबीजेन वेष्टयेत् ॥
चतुर्विंशद्दलं लिख्य तद्बहिर्मन्त्रवित्तमः ।
तद्दलेषु क्रमाद्ब्रह्मन् गायत्रं रामकं लिखेत् ॥
तत्संधौ सौरगायत्रीं लिखेल्लक्ष्म्या च वेष्टयेत् ।
द्वात्रिंशद्दलमालिख्य तद्दलेषु लिखेत्क्रमात् ॥
श्रीरामानुष्टुभं लिख्य तत्संधौ सौरमालिखेत् ।
श्रीबीजेन सुसंवेष्ट्य तद्बहिस्साध्यसंयुतम् ॥
रक्षरक्षेति संयोज्य हुंफट् हंसेति च क्रमात् ।
पाशाङ्कुशेन संवेष्ट्य रामबीजेन वेष्टयेत् ॥
इन्द्राद्यष्ट लिखेद्बीजान् पूर्वादिक्रमतो बुधः ।
प्राणप्रतिष्ठां कृत्वाथ धारयेद्यन्त्र मुत्तमम् ॥
मान्त्रिको वा द्विजश्रेष्ठः क्षत्रविट्शूद्रजातयः ।
अष्टैश्वर्याभिवृद्ध्यर्थं स्वराष्ट्रे शत्रुनिग्रहे ॥
महारोगादिसंप्राप्ते संसारे बन्धने भये ।
रामयन्त्रं प्रकुर्वीत धारयेदुत्तमोत्तमम् ॥

एतद्यन्त्रसमं नास्ति सत्यमेतच्चतुर्मुख ॥

इति श्रीशेषसंहितायां त्रिपञ्चाशोध्यायः.

---

## रामाङ्गमन्त्रः.

शेषः—

वक्ष्ये रामाङ्गमन्त्राणि राममन्त्रार्थसिद्धये ।
रहस्यं सर्वशास्त्राणां दुर्लभं साम्यमुत्तम् ॥
स्वाहान्तं तु श्रियादौ तु सीतायै मनुरुत्तमः ।
श्रीरामस्यार्धाङ्गमन्त्रस्सर्वसिद्धिप्रदायकः ॥
लं लक्ष्मणायेति तथा मनुं तद्वज्जपेद्बुधः ।
वराहैकाक्षरं तद्वत् नारसिंहं सुदर्शनम् ॥
हयग्रीवं मूलमन्त्रं मन्त्ररत्नं जपेत्सदा ।
श्रीराममन्त्रसिद्ध्यर्थं जपेदङ्गानि तत्तथा ॥

इति श्रीशेषसंहितायां चतुःपञ्चाशोध्यायः.

---

## रामाङ्गमन्त्रः

शेषः—

वक्ष्ये श्रीराममन्त्रस्य अङ्गाङ्गानि तथैवच ।
तत्तन्मन्त्रैः तदङ्गानि जपेत्पूर्वोक्तसंख्यया ॥
भं भरतायेति तथा मनुरिष्टार्थदायकः ।
शं शत्रुघ्नायेति मनुः सर्वाभीष्टप्रदायकः ॥
मं मर्कटायेति मनुः तथा काम्यार्थदायकः ।
पक्षिराजं जपेन्मन्त्री तदङ्गानि च तज्जपेत् ॥

इति शेषसंहितायां पञ्चपञ्चाशोध्यायः.

---

## गोपालमन्त्रः

शेषः—

वक्ष्ये गोपालमन्त्रस्य विधानं यन्त्रमुत्तमम् ।
तदङ्गाङ्गादिसहितं मान्मथं मन्त्रमुत्तमम् ॥
मान्मथं पूर्वमुद्धृत्य कृष्णायेति पदं ततः ।
गोविन्दाय पदं तद्वत् गोपीजनवल्लभायच ॥
वह्निजायान्तमुद्धृत्य जपेन्मन्त्रं बुधोत्तमः ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥
देवता मारगोपालः क्लीं बीजं शक्तिर्ह्रीं तथा ।
श्रीं कीलकं ऐंकवचं हुं अस्त्रं श्यामवर्णकम् ॥
तद्बीजेन करन्यासं कुर्यात्तन्मन्त्रसिद्धये ।
तद्बीजेन हृदि न्यस्य कृष्णायेति न्यसेत्क्रमात् ॥
गोविन्दायेति शिरसि बाह्वोः शेषेण विन्यसेत् ।
द्विपदे नेत्रयोर्न्यस्य शेषमस्त्रे प्रयोजयेत् ॥
व्याप्यं तद्व्यापकं चैव तन्मन्त्रेणैव विन्यसेत् ।
पञ्चबाणधरं देवं श्यामलं चक्रधारिणम् ॥
चञ्चलं मान्मथं कृष्णं तं भजे सर्वतोमुखम् ।
जपेन्मनुं तन्मयं तं ध्यायन्नक्षरसङ्ख्यया ॥
चातुरङ्गविधानेन तर्पयेच्चन्दनाम्भसा ।
कुंकुमागरुसंयुक्तं सकर्पूरं सहाब्जकम् ॥
पूजयेत्करवीरैश्च बिल्वपत्रैश्च पङ्कजैः ।
सर्वरोगविनाशार्थं सर्वशान्तिप्रसिद्धये ॥
सर्वकर्मादिसिद्ध्यर्थं पुत्रपौत्राभिवृद्धये ।

अष्टैश्वर्यप्रसिद्ध्यर्थं धर्ममोक्षार्थसिद्धये ।
उपद्रवे तु तत्काले रोगादौ ध्यानभेदतः ॥
सोमवारे भृगोः वारे सुपूज्यं कुङ्कुमान्वितम् ।
मृगनाभिसमायुक्तं कर्पूरनिशिथाम्बुना ॥
गोपालं नारसिंहन्तं चक्रराजं वराहकम् ।
श्रीरामं गारुडं वापि अभिषिञ्चेद्गृहे तथा ॥
देवालये विशेषेण श्रीभूपुरुषसूक्तकैः ।
नैवेद्यैः विविधैर्भक्ष्यैः विप्रानाराधयेत्सदा ॥
गुरुणा मन्त्रशीलेन विप्रेण शुचिनाब्जज ।
एतेनैवाभिषेकेण सर्वं सिद्ध्यति सर्वदा ॥
इदं रहस्यं परमं गुह्याद्गुह्यतमं भवेत् ।
पूर्वोक्तकृष्णमन्त्रेण जुहुयादयुतं तथा ॥
वश्यार्थी जुहुयाद्ब्रह्मन् तिलान् पूतमधुत्रयैः ।
मोहने जुहुयाद्दूर्वान् बिल्वपत्रं च तत्फलम् ॥
कटुत्रयं निम्बतैलं आकृष्ये तु मधुत्रयैः ।
अष्टैश्वर्यप्रसिद्ध्यर्थं कमलैः खादिरैस्तिलैः ॥
नीलोत्पलैरपामार्गैः करवीरैस्तु लाजकैः ।
जुहुयाद्गोघृताक्तेन ध्यानमण्डलभेदतः ॥
तत्तद्द्रव्येण जुहुयात्तत्तत्फलमवाप्नुयात् ।
दशांशसंख्यया कुर्यात् सर्वमन्त्रेष्वयं विधिः ॥

**अथ यन्त्रः.**

मन्त्रादिफलसिद्ध्यर्थं तद्यन्त्रं सम्यगुच्यते ।
त्रिकोणं पूर्वमालिख्य मध्ये तद्बीजसंयुतम् ॥

साध्यनामसदायुक्तं तत्कर्मपदसंयुतम् ।
लक्ष्मीमायासमायुक्तं लिखेन्मन्त्रविदुत्तमः ॥
बहिष्षट्कोणमालिख्य क्लीं कृष्णाय नमो लिखेत् ।
सन्धौ रामं समालिख्य मायाबीजेन वेष्टयेत् ॥
बहिरष्टदलं लिख्य तद्दलेषु लिखेत्क्रमात् ।
क्लीं ह्रीं गोविन्दाय स्वाहा सन्धौ मूलं लिखेद्बुधः ॥
लक्ष्मीबीजेन संवेष्ट्य तद्बहिर्द्वादशं दलम् ।
दलेषु विलिखेद्ब्रह्मन् रुक्मिणीवल्लभाय च ॥
हुंफट् स्वाहां लिखेत् सन्धौ वासुदेवं महामनुम् ।
श्रीबीजेन सुसंवेष्ट्य बहिष्षोडशकं दलम् ॥
लिखेद्दलेषु ओंह्रीं च श्रीं ऐं लक्ष्मीं च मान्मथम् ।
गोपीजनवल्लभाय स्वाहा सम्यक् लिखेद्बुधः ॥
तत्सन्धौ तु स्वरान् लिख्य ऐंकारेण च वेष्टयेत् ॥
बहिरष्टादशदलं विलिखेत्तद्दलेषु च ।
क्रमान्मदनगोपालं तत्संधौ विलिखेद्बुधः ॥
चक्रराजनृसिंहाख्यमनुरष्टादशाक्षरम् ।
सहस्रारेतिच तथा तज्ज्वालावर्तिनेति च ॥
क्षौं हनहन हुंफट्स्वाहा लिखेन्मन्त्रवित्तमः ।
मान्मथेन सुसंवेष्ट्य तद्बहिः परितो लिखेत् ॥
चतुर्विंशद्दलान् सम्यक् तद्दलेषु सुमन्त्रवित् ।
कृष्णगायत्रमालिख्य तत्संधौ सौरमालिखेत् ॥
मायाबीजेन संवेष्ट्य तद्बहिस्सम्यगब्जज ।
द्वात्रिंशद्दलमालिख्य कृष्णानुष्टुभमालिखेत् ॥

देवकीपुत्र गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥
एतत्संधौ लिखेन्मन्त्री मान्मथेनैव वेष्टयेत् ।
पाशाङ्कुशेन संवेष्ट्य मायया वेष्टयेद्बहिः ॥
लिखेदिन्द्रादिबीजानि अष्टदिक्षु क्रमात्सुधीः ।
पाशाङ्कुशेन सहितं विलिखेन्मन्त्रवित्तमः ॥
प्राणप्रतिष्ठां कृत्वाथ अभिषेकपुरस्सरम् ।
धारयेद्यन्त्रमेतत्तु वश्याकृष्यादिसिद्धये ॥
सर्वसंपत्प्रदानार्थं सर्वाभीष्टप्रसिद्धये ।
सर्वापमृत्युनाशार्थं मोक्षधर्मार्थसिद्धये ॥
इदमेव रहस्यन्तु सत्यं सत्यं चतुर्मुख ।

इति श्रीशेषसंहितायां षट्पञ्चाशोध्यायः.

---

## मदनगोपालमन्त्रः

शेषः—

वक्ष्ये मान्मथगोपालं अङ्गमन्त्राणि तद्यथा ।
तन्मन्त्रकर्मसिद्ध्यर्थं जपेत्तन्मन्त्रवित्तमः ॥
मन्त्ररत्नं मूलमन्त्रं रामं सौदर्शनं तथा ।
वराहन्तु हयग्रीवं जपेन्नामत्रयं बुधः ॥

इति शेषसंहितायां सप्तपञ्चाशोध्यायः.

---

शेषः—

मारगोपालमन्त्रस्य अङ्गाङ्गानि यथातथम् ।
वक्ष्ये तन्मन्त्रसिद्ध्यर्थं जपेत्पूर्वोक्तसंख्यया ॥
गारुडन्तु हनूमन्तं कार्तवीर्यन्तु वायवम् ।
तन्मन्त्रादौ जपेद्भक्त्या ध्यानमण्डलभेदतः ॥

इति शेषसंहितायां अष्टपञ्चाशोऽध्यायः.

---

## मूलमन्त्रः

शेषः—

मूलमन्त्रमथो वक्ष्ये न्यासमन्त्रादिसंयुतम् ।
मोक्षश्रीसर्वलाभार्थं अङ्गमन्त्रैर्यथातथम् ॥
प्रणवं पूर्वमुच्चार्य नमोनारायणाय च ।
जपेन्मन्त्रमिमं सौम्यं दृष्टादृष्टार्थदायकम् ॥
मूलमन्त्रस्य हे ब्रह्मन् नरः नारायणः तथा ।
ऋषिरित्युच्यते छन्दो देवी गायत्रमुच्यते ॥
श्रीमन्नारायणो देवः ओं बीजं शक्तियं तथा ।
ह्रीं कीलकं श्रीं कवचं ऐं अस्त्रं रक्तवर्णकम् ॥
प्रणवेन करन्यासं षडङ्गं षट्स्वरैर्न्यसेत् ।
तद्वन्न्यसेत् षडङ्गन्तु मूलमन्त्रपदत्रयैः ॥
व्याप्यं तद्व्यापकं चैव मूलमन्त्रेण कारयेत् ।
शङ्खचक्रधरं देवं गदापद्मधरं विभुम् ॥
श्रीभूनीलादिसहितं नारायणमहं भजे ।
अष्टायुतं जपेद्भक्त्या चातुरङ्गादिभिस्सह ॥

पूजयेच्छ्रीतुलस्याऽथ करवीरैश्च चम्पकैः ।
कमलैर्बिल्वपत्रैश्च मोक्षधर्मार्थसिद्धये ॥
गोक्षीरेण सकर्पूरैस्तर्पयेच्चन्दनाम्भसा ।
लक्ष्मीनिवाससिद्ध्यर्थं घृताक्तकमलैर्यजेत् ॥
अष्टैश्वर्यादिसिद्ध्यर्थं बिल्वपत्रमधुत्रयैः ।
वश्याकृष्यादिमोहे च करवीरैस्तिलैर्घृतम् ॥
मधुत्रयं गुग्गुलं च दूर्वाश्वत्थकुशैर्गुडम् ।
जुहुयान्मन्त्रविद्ब्रह्मन् कदल्यौदुम्बरार्ककैः ॥
स्तम्भनोच्चाटकरणे यजेन्मन्डलभेदतः ।
निम्बनक्षत्रकाष्ठैश्च खादिरार्ककटुत्रयैः ॥
भोजयेद्वैष्णवान् सम्यक् सूपपायससंयुतम् ।
सघृतं शर्कराढ्यं च अपूपैर्दधिना सह ॥
प्रियोक्त्याद्यैस्तथा ब्रह्मन् सर्वमन्त्रेष्वयं विधिः ।

## मूलयन्त्रः.

मोक्षधर्मार्थसिद्ध्यर्थं यन्त्रः मूलस्य चोच्यते ॥
षट्कोणं चक्रमालिख्य तन्मध्ये प्रणवं श्रियः ।
साध्यादिकां भूं नीलां च कर्मनामपदान्विताम् ॥
तत्कोणेषु क्रमाद्विद्वान् लिखेद्विष्णुषडर्णकम् ।
तत्सन्धौ कृष्णमालिख्य श्रीबीजेनैव वेष्टयेत् ॥
बहिरष्टदलं लिख्य लिखेन्मूलं दलेषु च ।
सन्धौ नृसिंहं विलिखेत् भूबीजेनैव वेष्टयेत ॥
तद्बहिर्द्वादशदलं दलेषु द्वादशाक्षरम् ।
लिखेत्सन्धौ लिखेद्धीमान् सीतारामममनुं क्रमात् ॥

नीलाबीजेन संवेष्ट्य तद्बहिः षोडशं दलम् ।
विलिखेत्तद्दलेष्वेव पूर्वोक्तं चक्रराजकम् ॥
तत्सन्धौ तु स्वरान् लिख्य मान्मथेन सुवेष्टयेत् ।
चतुर्विंशद्दलान् लिख्य तद्बहिस्तद्दलेषु च ॥
विष्णुगायत्रकं लिख्य तत्सन्धौ सौरमालिखेत् ।
वराहेण सुसंवेष्ट्य तद्बहिर्विलिखेद्बुधः ॥
द्वात्रिंशद्दलकं सम्यक् तद्दलषु क्रमाल्लिखेत् ।
पुण्डरीकाक्षस्य मनुं सन्धौ सौदर्शनं लिखेत् ॥
लक्ष्मीबीजेन संवेष्ट्य तद्बहिस्साध्यसंयुतम् ।
हंसहंसेतिसंयुक्तं कर्मनामसमन्वितम् ॥
परितो विलिखेन्मन्त्री प्रणवेन तु वेष्टयेत् ।
पाशाङ्कुशेन संवेष्ट्च अष्टदिक्षु लिखेत्क्रमात् ॥
इन्द्रादेरष्टबीजानि पाशाङ्कुशसमन्वितम् ।
एतन्मन्त्रं लिखेद्भक्त्या मन्त्रवित्साधकोत्तमः ॥
सृष्टिस्थित्यन्तमोक्षार्थं धर्मकर्मार्थसिद्धये ।
विप्राद्यः धारयेद्ब्रह्मन् क्षत्रविट्शूद्रजातयः ॥
यन्त्रोत्तममिदं सौम्यं पूजयेद्विधिना सदा ।

इति शेषसंहितायां एकोनषष्टितमोऽध्यायः.

---

## मूलाङ्गमन्त्रः

शेषः—

वक्ष्ये तन्मूलमन्त्रस्य अङ्गमन्त्राणि शास्त्रतः ।
मूलमन्त्रार्थसिध्यर्थं तत्वज्ञानात्मशुद्धये ॥

मन्त्ररत्नं चक्रराजं वाराहं नारसिंहकम् ।
रामं कृष्णं हयग्रीवं जपेद्ब्रह्मविदब्जज ॥

इति शेषसंहितायां षष्टितमोऽध्यायः.

---

## अङ्गाङ्गमन्त्रः

शेषः—

वक्ष्ये तन्मूलमन्त्रस्य अङ्गाङ्गानि मनून् तथा ।
जपेत्तन्मन्त्रसिद्ध्यर्थं मन्त्रादौ पूर्वसंख्यया ॥
वैष्वक्सेनं गारुडं च मर्कटेशं नवग्रहान् ।
मूलमन्त्रविधानज्ञो जपेन्मन्त्राङ्गसंख्यया ॥
तत्तन्मन्त्रविधानेन तत्तन्मन्त्रप्रयोगतः ।
तत्तदस्त्रेण संयोज्य होमाद्यैस्तु प्रयोजयेत् ॥

इति शेषसंहितायां एकषष्टितमोऽध्यायः.

---

## मन्त्ररत्नम्

शेषः—

मन्त्ररत्नमहं वक्ष्ये मोक्षधर्मार्थदायकम् ।
सर्वबन्धविनाशार्थं पञ्चसंस्कारलक्षणम् ॥
न्यासध्यानादिसहितं अङ्गाङ्गादिसमन्वितम् ।
प्रणवं पूर्वमुद्धृत्य श्रीमत्पदमनन्तरम् ॥
नारायणचरणौ शरणं प्रपद्येऽथ च ।
श्रीमते नारायणाय नमोन्तं मनुमुद्धरेत् ॥

क्षत्रविट्शूद्रजातीनां अङ्गाङ्गं प्रणवं विना ।
भवेन्मोक्षे विप्रवत्स्यात् ताराद्याः क्षत्रवैश्ययोः ॥
ताराङ्गाङ्गादिरहितं प्रपत्तिं योजपेद्द्विजः ।
य एव ब्राह्मणो ब्रह्मन् सर्वकर्मबहिष्कृतः ॥
तस्मात्सर्वप्रयत्नेन जपेन्न्यासं द्विजोत्तमः ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥
श्रीमन्नारायणो देवो ओंबीजं शक्तिर्मंतथा ।
श्रीं कीलकं ह्रीं कवचं ऐं अस्त्रं रक्तवर्णकम् ॥
श्रीमन्नारायणेत्युक्त्वा प्रीत्यर्थे विनियोजयेत् ।
प्रणवेन करन्यासं षडङ्गं षट्स्वरैर्न्यसेत् ॥
करौ पादौ च जानौ च कट्यां पाणौ च विन्यसेत् ।
वामादिनाभौ कुक्षौ च हृदये प्रणवादिकम् ॥
भुजे कर्णे तथा वक्त्रे नासाक्षिश्रुतिमूर्धनि ।
व्याप्यं व्यापकसंज्ञाञ्च अक्षरन्यासमुत्तमम् ॥
मूर्धादिकरपर्यन्तं सृष्टिन्यास इति स्मृतम् ।
षट्पदैस्तु करन्यासं षडङ्गं विन्यसेत्तथा ॥
योगादिपल्लवाद्यैश्च हृदादिन्यासमाचरेत् ।
शङ्खचक्रगदापद्मधरं नीलोत्पलप्रभम् ॥
पुण्डरीकाक्षममलं किरीटादिविभूषितम् ।
श्रीभूमिसहितं देवं पङ्कजासनसंस्थितम् ॥
ज्ञानानन्दमयं देवं नारायणमुपास्महे ।
ध्यायन्नारायणं भक्त्या जपेत्तत्क्रमाच्छुचिः ॥

ब्रह्महत्यादिपापानां सकृदुच्चारणं भवेत् ।
महारोगादिके सम्यक् अयुतं जपमाचरेत् ॥
सर्वपापविनाशार्थं लक्षमेकं जपेद्बुधः ।
सर्वबन्धविनाशार्थं जपेल्लक्षत्रयं शुचिः ॥
विष्णोस्सायुज्यधर्मार्थं प्रपन्नस्सर्वदा जपेत् ।
साङ्गाङ्गसहितं न्यासं जपेद्यो ब्रह्मवित् द्विजः ॥
स एव परमैकान्ती स प्रपन्नो जितेन्द्रियः ।
स एव ब्रह्मवित् ब्रह्मन् स याति परमं पदम् ॥
तस्मात्सर्वप्रयत्नेन प्रपत्तिं सर्वदा जपेत् ।
सत्यं सत्यं पुनस्सत्यं इदमेव चतुर्मुख ॥
चातुरङ्गविधानेन तर्पयेच्चन्दनाम्भसा ।
पूजयेत्कमलैर्भक्त्या बिल्वपत्रैश्च चम्पकैः ॥
श्रीतुलस्या च वकुलैः करवीरैश्च जातिभिः ।
प्रत्येकं मन्त्ररत्नेन पूजयेन्मोक्षचिन्तकः ॥
अष्टैश्वर्यादिसिध्यर्थं जुहुयात्कमलैस्तिलैः ।
मधुत्रयैरपामार्गैः पायसेन घृतेन च ॥
तत्तद्द्रव्येण जुहुयात् तत्तत्फलमवाप्नुयात् ।
वैष्णवान् भोजयेत्सम्यक् सूपौदनरसायनैः ॥
पायसान्नैरपूपाद्यैः सघृतैस्सत्फलैस्सदा ।
स्रक्चन्दनादिताम्बूलैः दक्षिणाद्यैः प्रियोक्तिभिः ॥
अर्चयेन्मनसा वाचा कर्मणा प्रत्यहं द्विजः ।
जपधर्मादिसिध्यर्थं मोक्षज्ञानात्मशुद्धये ॥

मन्त्ररत्नजपं कुर्यात् चातुरङ्गैस्सदा द्विजः ।

अथ यन्त्रः.

मन्त्ररत्नार्थसिध्यर्थं वक्ष्ये तद्यन्त्रमुत्तमम् ॥
षट्कोणं पूर्वमालिख्य तन्मध्ये तारसंयुतम् ।
श्रिया भूम्या नीलया च रक्षरक्षेति साध्यकम् ॥
विलिख्य तद्दलेष्वेव लिखेद्विष्णुषडक्षरम् ।
लिखेत्सन्धौ चक्रराजं प्रणवेनैव वेष्टयेत् ॥
बहिरष्टदलं लिख्य तद्दलेषु चतुर्मुख ।
मूलमन्त्रं लिखेद्धीमान् तत्सन्धौ तु नृसिंहकम् ॥
श्रीबीजेन सुसंवेष्ट्य तद्बहिर्द्वादशं दलम् ।
दलेषु राममालिख्य तत्सन्धौ राममालिखेत् ।
भूबीजेन सुसंवेष्ट्य तद्बहिः द्वादशं दलम् ॥
लिखेद्दलेषु तन्मन्त्री विलिखेद्द्वादशाक्षरम् ॥
सन्धौ वाराहमालिख्य नीलाबीजेन वेष्टयेत् ।
तद्बहिः षोडषदलं विलिखेतद्दलेषु च ॥
हयग्रीवं समालिख्य तत्सन्धौ तु स्वरान् लिखेत् ।
रामबीजेन संवेष्ट्य बहिरष्टादशं दलम् ॥
लिखेद्दलेषु विलिखेत् मनुं कृष्णस्य मान्मथम् ।
तत्सन्धौ विलिखेद्धीमान् चक्रराजस्य केसरिम् ॥
अष्टादशैकार्णमनुं क्रमेणैव स बुद्धिमान् ।
लक्ष्मीबीजेन संवेष्ट्य तद्बहिः सम्यगालिखेत् ॥
चतुर्विंशद्दलान लिख्य तद्दलेषु विचक्षणः ।
विष्णुगायत्रमालिख्य तत्सन्धौ सौरमालिखेत् ॥

हयग्रीवेण संवेष्ट्य तद्बहिर्मन्त्रवित्तमः ।
द्वात्रिंशद्दलमालिख्य तद्दलेषु लिखेत्क्रमात् ॥
पुण्डरीकाक्षस्य मनुं तत्सन्धौ सम्यगब्जज ।
मन्त्रराजं समालिख्य रामबीजेन वेष्टयेत् ॥
पूर्वाद्यासु लिखेद्बीजान् इन्द्राद्यष्टसु मन्त्रवित् ।
परितो हंसहंसेति साध्यं रक्षेति संलिखेत् ॥
पाशाङ्कुशेन संवेष्ट्य प्रणवेनैव वेष्टयेत् ।
पाशाङ्कुशेन सहितं मन्त्रमेतत्समुद्धरेत् ॥
मन्त्राचार्येण कर्तव्यं एतद्यन्त्रं विधानतः ।
सदाचार्याय सच्छिष्यो दद्यादाभरणादिकान् ॥
उष्णीषपटवस्त्रादीन् छत्रचामरवाहनम् ।
ग्रामं च क्षेत्रदानं च दद्याद्भक्त्यनुसारतः ॥
तद्धस्तेनैव तद्यन्त्रं धारयेन्मङ्गलादिभिः ।
तत्तु मन्त्रेण कर्तव्यं तप्तचक्रादिधारणम् ॥
ऊर्ध्वपुण्ड्रादिकं धृत्वा सम्यक्तदुपदेशतः ।
ग्राहयेन्मूलमन्त्रं तु मन्त्ररत्नं यथाविधि ॥
अयमेव परो धर्मः सर्वेषां मोक्षदायकः ।
अन्यथा ये करिष्यन्ति तस्यायुः श्रीश्च नश्यति ॥
तस्मात्सर्वप्रयत्नेन मन्त्रतन्त्रादिसंयुतम् ।
पञ्चसंस्कारकं कुर्यात् मोक्षधर्मार्थसिद्धये ॥
धारयेद्यन्त्रमेतत्तु महारोगादिसंभवे ।
सर्वग्रहविनाशे तु सर्वापस्मारनाशने ॥

सर्वशत्रुविनाशे च षट्कर्मफलसिद्धये ।
अष्टैश्वर्यादिसिद्ध्यर्थं सन्तानार्थे शुभाशुभे ॥
एतदेवाभिमुख्यं स्यान्मोक्षोपायकरश्शुचिः ।
सर्वेषां सर्वदा सम्यक् गृहस्योत्तममब्जज ॥

इति शेषसंहितायां द्विषष्टितमोऽध्यायः.

---

### न्यासाङ्गमन्त्रः.

शेषः—

वक्ष्ये न्यासाङ्गमन्त्राणि न्यासमन्त्रार्थसिद्धये ।
तत्त्वज्ञानात्मशुद्ध्यर्थं यतीनां च द्विजन्मनाम् ॥
गायत्रीं मूलमन्त्रं तु विष्णुं तद्वासुदेवकम् ।
वाराहं तु हयग्रीवं नृसिंहं चक्रराजकम् ॥
रामं कृष्णं पौरुषं च श्रीभूसूक्तप्रयुक्तकम् ।
बीजमालां जपेद्भक्त्या पूर्वोक्तक्रमसंख्यया ॥
एकाक्षरो बीजमन्त्रः तद्वदेकाक्षराद्बहिः ।
तद्वदानुष्टुबन्तं तु पिण्डमन्त्रा इति स्मृताः ॥
आनुष्टुभं मनुस्सोयं मालामन्त्रः परात्मकः ।
बीजमन्त्रं जपेल्लक्षमयुतं पिण्डमन्त्रकम् ॥
संज्ञामन्त्रं सहस्रं तु पदमन्त्रं शतं जपेत् ।
चातुरङ्गं तथा कुर्यात् तत्तन्मन्त्रार्थसिद्धये ॥
बीजमालास्वरूपन्तु वक्ष्ये तन्न्याससंयुतम् ।
प्रणवं पूर्वमुद्धृत्य मायां श्रीं ऐं च मन्मथम् ॥
लक्ष्मीं लक्ष्मीनृसिंहं च सुदर्शनन्नृकसरिम् ।

हयग्रीवं रामचन्द्रं नृसिंहं च वराहकम् ।
पर्यायेण समुद्धृत्य सर्वं सर्वार्थसिद्धिदम् ॥
बीजमालामनुं नित्यं जपेद्ब्रह्मविदब्जज ।
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ॥
परब्रह्म नृसिंहश्च देवता भगवान् हरिः ।
ओं बीजं शक्तिहुं चैव श्रीं कीलकमतः परम् ॥
ह्रीं कवचं क्ष्रौमथास्त्रं रक्तवर्णं स्मरन्न्यसेत् ।
बीजद्वयेन सन्मन्त्री षडङ्गं तत्क्रमात् न्यसेत् ॥
व्याप्यव्यापकसंज्ञां तु तन्मन्त्रेणैव कारयेत् ।
तत्तन्मण्डलभेदेन जपेद्ध्यायन् सुमन्त्रवित् ॥
सर्वाभरणभूषाङ्गं सर्वदेवमयं विभुम् ।
सर्वायुधधरं देवं भजे ब्रह्मनृकेसरिम् ॥
पौरश्चरणकं सर्वं नृसिंहैकाक्षरं यथा ।
इदं रहस्यं परमं सर्वेषां सम्यगब्जज ॥

इति शेषसंहितायां त्रिषष्टितमोऽध्यायः.

---

## प्रपत्त्यङ्गमन्त्रः.

शेषः—

प्रपत्त्यङ्गाङ्गमन्त्राणि वक्ष्ये तन्मन्त्रसिद्धये ।
मोक्षधर्मप्रसिद्ध्यर्थं तत्त्वज्ञानात्मशुद्धये ।
नित्यकर्माङ्गमन्त्राणि तथा नैमित्तिकानि च ॥

सत्त्वानि विष्णुमन्त्राणि गारुडञ्च चतुमुर्ख ।
नामत्रयं हनूमन्तं विष्वक्सेनमनुं तथा ॥

**चरममन्त्रः.**

चरमं तु जपेन्नित्यं वक्ष्ये तच्चरमं शुभम् ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।
ऋषिर्ब्रह्मास्य मन्त्रस्य छन्दोऽनुष्टुभ एव च ॥
श्रीमन्नारायणो देवः ओं बीजं शक्तिश्रीं तथा ।
ह्रीं कीलकं ऐं कवचं क्ष्रौं अस्त्रं श्वेतवर्णकम् ॥
श्रीमन्नारायणेत्युक्त्वा प्रीत्यर्थे विनियोगतः ।
प्रणवेन करन्यासं षडङ्गं षट्स्वरैर्न्यसेत् ॥
व्याप्यादीन् प्रणवेनैव कुर्याद्ध्यायन् सुमन्त्रवित् ।
सहस्रशीर्षं देवं विश्वाक्षं विश्वतोमुखम् ॥
विश्वं नारायणं देवं अक्षरं परमं भजे ।
जपेन्नित्यं द्विजश्रेष्ठो ह्यङ्गमन्त्रोक्तसंख्यया ॥
एतदेव गतिस्सम्यक् गतिरन्यत्र नान्यथा ।
एवं नियमयुक्तानां प्रपन्नानां चतुर्मुख ॥
सत्यं मुक्तिं प्रदास्मामि सत्यमेव तु सर्वदा ।
वैष्णवो वाथ पाषण्डी मण्त्राण्यागमनानि च ॥
जपेन्नित्यादिकर्माणि क्वचिद्वा दूषयन्ति ये ।
स एव ब्रह्महन्ता च सर्वकर्मबहिष्कृतः ॥
मन्मन्त्रदूषकं बध्वा राजा सद्धर्मपालकः ।
चक्षुर्दण्डं श्वानपादं कृत्वा तद्दूषकं त्यजेत् ॥

उपेक्षितश्चेत् तद्राष्ट्रं रोगाद्यैर्नश्यति ध्रुवम् ।
दुर्भिक्षं चोरभूपालैः सत्यमेव चतुर्मुख ॥
सङ्करस्पृष्टदोषादीन् मम कुर्वन्ति ये द्विजाः ।
दण्डं च पूर्ववत्तेषां नाशः तद्वत्सुनिश्चियः ॥
तस्मात्सर्वप्रयत्नेन परिहृत्य च सङ्करान् ।
अनाचारान् तथा नीचान् तद्विप्रान् परिहृत्य च ॥
नित्यनैमित्तिकान् सर्वान्नृपाद्यैः कुरु चाब्जज ।
इदं रहस्यं परमं गुह्याद्गुह्यतमं भवेत् ॥
यः पठेदाचरेद्भक्त्या एतच्छास्त्रोक्तमार्गतः ।
इह भोगान् स वै प्राप्य स याति परमं पदम् ॥

इति शेषसंहितायां चतुष्षष्टितमोऽध्याय.

इति श्रीमति भगवच्छास्त्रे पाञ्चरात्राभिधाने सर्वसंहिता-
सारभूता शेषसंहिता समाप्ता ॥

श्रीवासुदेवार्पणमस्तु.

